# अथ निघण्टुः ।

## अथ प्रथमोऽध्यायः ।

गौः । ग्मा । ज्मा । क्ष्मा । क्षा । क्षमा । क्षोणी । क्षितिः । अवनिः । उर्वी । पृथ्वी । मही । रिपः । अदितिः । इळा । निर्ऋतिः । भूः । भूमिः । पूषा । गातुः । गोत्रेति पृथिव्याः १

हेम । चन्द्रम् । रुक्मम् । अयः । हिरण्यम् । पेशः । कृशनम् । लोहम् । कनकम् । काञ्चनम् । भर्म । अमृतम् । मरुत् । दत्रम् । जातरूपमिति हिरण्यस्य २

अम्बरम् । वियत् । व्योम । बर्हिः । धन्व । अन्तरिक्षम् । आकाशम् । आपः । पृथिवी । भूः । स्वयम्भूः । अध्वा । पुष्करम् । सगरः । समुद्रः । अध्वरमित्यन्तरिक्षस्य ३

स्वः । पृश्निः । नाकः । गौः । विष्टप् । नभ इति साधारणानि ४

खेदयः । किरणाः । गावः । रश्मयः । अभीशवः । दीधितयः । गभस्तयः । वनम् । उस्राः । वसवः । मरीचिपाः । मयूखाः । सप्त ऋषयः । साध्याः । सुपर्णा इति रश्मीनाम् ५

आताः । आशाः । उपराः । आष्ठाः । काष्ठाः । व्योम । ककुभः । हरित इति दिशाम् ६

श्यावी । क्षपा । शर्वरी । अक्तुः । ऊर्म्या । राम्या । यम्या । नम्या । दोषा । नक्ता । तमः । रजः । असिक्नी । पयस्वती । तमस्वती । घृताची । शिरिणा । मोकी । शोकी । ऊधः । पयः । हिमा । वस्वेति रात्रेः ७

वि॒भा॒वरी॑ । सू॒नरी॑ । भास्व॑ती । ओ॒द॑ती । चि॒त्राम॑घा । अर्जु॑नी । वा॒जिनी॑ । वा॒जिनी॑वती । सु॒म्ना॒वरी॑ । अ॒ह॒ना । द्यो॒त॒ना । श्वे॒त्या । अरु॑षी । सू॒नृता॑ । सू॒नृता॑वती । सू॒नृतावरीत्युषसः ८

वस्तो॑ः । द्यु॒ः । भा॒नुः । वा॒स॒रम् । स्वस॑राणि । घ्रं॒सः । घ॒र्म॑ः । घृ॒णः । दिन॑म् । दिवा॑ । दि॒वेदि॑वे । द्यविद्यवीत्यह्नः ९

अद्रि॑ः । ग्रावा॑ । गो॒त्रः । व॒लः । अश्न॑ः । पु॒रु॒भोजा॑ः । व॒लि॒शा॒नः । अश्मा॑ । पर्व॑तः । गि॒रिः । व्र॒जः । च॒रुः । व॒रा॒हः । शंब॑रः । रौ॒हि॒णः । रै॒व॒तः । फ॒लि॒गः । उप॑रः । उप॑लः । च॒म॒सः । अहि॑ः । अ॒भ्रम् । व॒ला॒ह॒कः । मे॒घः । दृति॑ः । ओ॒द॒नः । वृष॑न्धिः । वृ॒त्रः । अ॒सु॒रः । कोश इति मेघानाम् १०

श्लोक॑ः । धारा॑ । इळा॑ । गौः । गौ॒री । गान्ध॑र्वी । ग॒भी॒रा । ग॒म्भी॒रा । म॒न्द्रा । म॒न्द्राज॑नी । वाशी॑ । वाणी॑ । वाणी॑ची । वा॒णः । प॒विः । भार॑ती । ध॒मनि॑ः । ना॒ळीः । मेना॑ । मे॒ळिः । सू॒र्या॑ । सर॑स्वती । नि॒वित् । स्वाहा॑ । व॒ग्नुः । उ॒प॒ब्दिः । मा॒युः । का॒कुत् । जि॒ह्वा । घोष॑ः । स्वर॑ः । शब्द॑ः । स्व॒नः । ऋक् । होत्रा॑ । गीः । गाथा॑ । ग॒णः । धेना॑ । ग्नाः । वि॒पा । न॒ना । कशा॑ । धि॒षणा॑ । नौः । अ॒क्षर॑म् । म॒ही । अदि॑तिः । शची॑ । वाक् । अ॒नु॒ष्टुप् । धे॒नुः । व॒ल्गुः । ग॒ल्दा । सर॑ः । सु॒प॒र्णी । बेकु॑रेति वाचः ११

अर्ण॑ः । क्षोद॑ः । क्षद्म॑ । नभ॑ः । अम्भ॑ः । कब॑न्धम् । स॒लि॒लम् । वाः । वन॑म् । घृ॒तम् । मधु॑ । पुरी॑षम् । पिप्प॑लम् । क्षी॒रम् । वि॒षम् । रेत॑ः । कश॑ः । जन्म॑ । बृबू॑कम् । बु॒सम्

। तुग्र्या । बुर्बुरम् । सुक्षेम । धरुणम् । सुरा । अररिन्दानि । ध्वस्मन्वत् । जामि । आयुधानि । क्षपः । अहिः । अक्षरम् । स्रोतः । तृप्तिः । रसः । उदकम् । पयः । सरः । भेषजम् । सहः । शवः । यहः । ओजः । सुखम् । क्षत्रम् । आवयाः । शुभम् । यादुः । भूतम् । भुवनम् । भविष्यत् । आपः । महत् । व्योम । यशः । महः । सर्णीकम् । स्वृतीकम् । सतीनम् । गहनम् । गभीरम् । गम्भरम् । ईम् । अन्नम् । हविः । सद्म । सदनम् । ऋतम् । योनिः । ऋतस्य योनिः । सत्यम् । नीरम् । रयिः । सत् । पूर्णम् । सर्वम् । अक्षितम् । बर्हिः । नाम । सर्पिः । अपः । पवित्रम् । अमृतम् । इन्दुः । हेम । स्वः । सर्गाः । शम्बरम् । अभ्वम् । वपुः । अम्बु । तोयम् । तूयम् । कृपीटम् । शुक्रम् । तेजः । स्वधा । वारि । जलम् । जलाषम् । इदमित्युदकस्य १२

अवनयः । यव्याः । खाः । सीराः । स्रोत्याः । एन्वः । धुनयः । रुजानाः । वक्षणाः । खादो अर्णाः । रोधचक्राः । हरितः । सरितः । अग्रुवः । नभन्वः । वध्वः । हिरण्यवर्णाः । रोहितः । सस्रुतः । अर्णाः । तिन्धवः । कुल्याः । वर्यः । उर्व्यः । इरावत्यः । पार्वत्यः । स्रवन्त्यः । ऊर्जस्वत्यः । पयस्वत्यः । तरस्वत्यः । सरस्वत्यः । हरस्वत्यः । रोधस्वत्यः । भास्वत्यः । अजिराः । मातरः । नद्य इति नदीनाम् १३

अत्यः । हयः । अर्वा । वाजी । सप्तिः । वह्निः । दधिक्राः । दधिक्रावा । एतग्वः । एतशः । पैद्वः । दौर्गहः । औच्चैश्रवसः । तार्क्ष्यः । आशुः । ब्रध्नः । अरुषः । मांश्चत्वः । अव्यथयः । श्येनासः । सुपर्णाः । पतङ्गाः । नरः । ह्वार्याणाम् । हंसासः । अश्वा इत्यश्वानाम् १४

हरी॒ इन्द्र॑स्य । रोहि॑तो॒ऽग्नेः । ह॒रित॑ आ॒दि॒त्यस्य॑ । रास॑भाव॒श्विनोः॑ । अ॒जाः पू॒ष्णः । पृष॑त्यो म॒रुता॑म् । अरु॑ण्यो॒ गाव॑ उ॒षसा॑म् । श्या॒वाः स॑वि॒तुः । वि॒श्वरू॑पा बृह॒स्पते॑ः । नियु॑तो वायोरिति आदिष्टोपयोजनानि १५

भ्राज॑ते । भ्राश॑ते । भ्राश्य॑ति । दी॒दय॑ति । शोच॑ति । मन्द॑ते । भन्द॑ते । रोच॑ते । ज्योत॑ते । द्योत॑ते । द्युमदिति ज्वलतिकर्मा॑णः १६

ज॒मत् । क॒ल्म॒ली॒किन॑म् । ज॒ञ्ज॒णा॒भव॑न् । म॒ल्म॒ला॒भव॑न् । अ॒र्चिः । शो॒चिः । तप॑ः । तेज॑ः । हर॑ः । हृणि॑ः । शृङ्गाणि शृङ्गाणीति ज्वलतः १७

इति निघण्टौ प्रथमोऽध्यायः

अथ द्वितीयोऽध्यायः

अप॑ः । अप्न॑ः । दंस॑ः । वेष॑ः । वेप॑ः । वि॒ष्ट्वी । व्र॒तम् । कर्व॑रम् । क॒रुण॑म् । शक्म॑ । ऋतु॑ः । कर॑णानि । करां॑सि । करि॑क्रत् । कर॑न्ती । च॒क्रत् । कर्त्व॑म् । कर्तो॑ः । कर्त॒वै॑ । कृ॒त्वी । धीः । शची॑ । शमी॑ । शिमी॑ । शक्ति॑ः । शिल्पमिति कर्म॑णः १

तुक् । तो॒कम् । तन॑यः । तोक्म॑ । तक्म॑ । शेष॑ः । अप्न॑ः । गय॑ः । जाः । अप॑त्यम् । य॒हुः । सू॒नुः । नपा॑त् । प्र॒जा । वीजमित्यपत्यस्य २

म॒नुष्या॑ः । नर॑ः । ध॒वाः । ज॒न्तव॑ः । विश॑ः । क्षि॒तय॑ः । कृ॒ष्टय॑ः । च॒र्ष॒णय॑ः । नहु॑षः । हर॑यः । मर्या॑ः । मर्त्या॑ः । मर्ता॑ः । व्राता॑ः । तु॒र्वशा॑ः । द्रु॒ह्यव॑ः । आ॒यव॑ः । यद॑वः ।

अनवः । पूरवः । जगतः । तस्थुषः । पञ्चजनाः । विवस्वन्तः । पृतना इति मनुष्याणाम् ३

आयती । च्यवाना । अभीशू । अप्नवाना । विनङ्गृसौ । गभस्ती । कुरस्नौ । बाहू । भुरिजौ । क्षिपस्ती । शक्वरी । भरित्रे इति बाह्वोः ४

अग्रुवः । अण्व्यः । क्षिपः । विशः । शर्याः । रशनाः । धीतयः । अथर्यः । विपः । कक्ष्याः । अवनयः । हरितः । स्वसारः । जामयः । सनाभयः । योक्त्राणि । योजनानि । धुरः । शाखाः । अभीशवः । दीधितय इत्यङ्गुलीनाम् ५

वश्मि । उश्मसि । वेति । वेनति । वेसति । वाञ्छति । वष्टि । वनोति । जुषते । हर्यति । आ चके । उशिक् । मन्यते । छन्त्सत् । चाकनत् । चकमानः । कनति । कानिषदिति कान्तिकर्माणः ६

अन्धः । वाजः । पयः । श्रवः । पृक्षः । पितुः । सुतः । सिनम् । अवः । क्षु । धासिः । इरा । इळा । इषम् । ऊर्क् । रसः । स्वधा । अर्कः । क्षद्म । नेमः । ससम् । नमः । आयुः । सूनृता । ब्रह्म । वर्चः । कीलालमित्यन्नस्य ७

आ वयति । भर्वति । बभस्ति । वेति । वेवेष्टि । अविष्यन् । बप्सति । भसथः । बब्धाम् । ह्वयतीत्यत्तिकर्माणः । ८

ओजः । पाजः । शवः । तवः । तरः । त्वक्षः । शर्धः । बाधः । नृम्णम् । तविषी । शुष्मम् । शुष्णम् । दक्षः । वीळु । च्यौत्नम् । शूषम् । सहः । यहः । वधः । वर्गः ।

वृजनम् । वृक् । मज्मना । पौंस्यानि । धर्णसिः । द्रविणम् । स्यन्द्रासः । शम्बरमिति बलस्य ९

मघम् । रेक्णः । रिक्थम् । वेदः । वरिवः । श्वात्रम् । रत्नम् । रयिः । क्षत्रम् । भगः । मीळ्हुम् । गयः । द्युम्नम् । इन्द्रियम् । वसु । रायः । राधः । भोजनम् । तना । नृम्णम् । बन्धुः । मेधा । यशः । ब्रह्म । द्रविणम् । श्रवः । वृत्रम् । ऋतमिति धनस्य १०

अघ्न्या । उस्रा । उस्रिया । अही । मही । अदितिः । इळा । जगती । शक्वरीति गवाम् ११

रेळते । हेळते । भामते । भृणीयते । अभीणाति । अर्षति । दोधति । वनुष्यति । कम्पते । भोजत इति क्रुध्यतिकर्माणः १२

हेळः । हरः । हृणिः । त्यजः । भामः । एहः । ह्वरः । तपुषी । जूर्णिः । मन्युः । व्यथिरिति क्रोधस्य १३

वर्तते । अयते । लोटते । लोठते । स्यन्दते । कसति । सर्पति । स्यमति । स्रवति । स्रंसते । अवति । श्चोतति । ध्वंसति । वेनति । मार्ष्टि । भुरण्यति । शवति । कालयति । पेलयति । कण्टति । पिस्यति । बिस्यति । मिस्यति । प्रवते । प्लवते । च्यवते । कवते । गवते । नवते । क्षोदति । नक्षति । सक्षति । म्यक्षति । सचति । ऋच्छति । तुरीयति । चतति । अतति । गाति । इयक्षति । सश्चति । त्सरति । रंहति । यतते । भ्रमति । ध्रजति । रजति । लजति । क्षियति । धमति । मिनाति । ऋण्वति । ऋणोति । स्वरति । सिसर्ति । विषिष्टि । योषिष्टि । रिणाति । रीयते । रेजति । दध्यति । दभ्नोति । युध्यति । धन्वति । अरुषति । आर्यति

। डीयते । तर्कति । दीयति । ईर्षति । फणति । हनति । अर्दति । मर्दति । सस्तृते । नसते । हर्यति । इर्यति । ईर्ते । ईङ्खते । ज्रयति । श्वात्रति । गन्ति । आ गनीगन्ति । जङ्गन्ति । जिन्वति । जसति । गमति । ध्रति । ध्राति । ध्रयति । वहते । रथर्यति । जेहते । ष्वःकति । चुम्पति । प्साति । वाति । याति । इषति । द्राति । दूळति । एजति । जमति । जवति । वञ्चति । अनिति । पवते । हन्ति । सेधति । अगन् । अजगन् । जिगाति । पतति । इन्वति । द्रमति । द्रवति । वेति । हयन्तात् । एति । जगायात् । अयुथुरिति द्वाविंशशतं गतिकर्माणः १४

नु । मक्षु । द्रवत् । ओषम् । जीराः । जूर्णिः । शूर्ताः । शूघनासः । शीभम् । तृषु । तूयम् । तूर्णिः । अजिरम् । भुरण्युः । शु । आशु । प्राशुः । तूतुजिः । तूतुजानः । तुज्यमानासः । अज्राः । साचीवित् । द्युगत् । ताजत् । तरणिः । वातरंहा इति क्षिप्रस्य १५

तळित् । आसात् । अम्बरम् । तुर्वशे । अस्तमीके । आके । उपाके । अर्वाके । अन्तमानाम् । अवमे । उपम इत्यन्तिकस्य १६

रणः । विवाक् । विखादः । नदनुः । भरे । आक्रन्दे । आहवे । आजौ । पृतनाज्यम् । अभीके । समीके । ममसत्यम् । नेमधिता । सङ्काः । समितिः । समनम् । मीळ्हे । पृतनाः । स्पृधः । मृधः । पृत्सु । समत्सु । समर्ये । समरणे । समोहे । समिथे । संख्ये । सङ्गे । संयुगे । सङ्गथे । सङ्गमे । वृत्रतूर्ये । पृक्षे । आणौ । शूरसातौ । वाजसातौ । समनीके । खले । खजे । पौंस्ये । महाधने । वाजे । अज्म । सद्म

। सं॒यत् । संवत इति संग्रामस्य १७

इन्व॑ति । नक्ष॑ति । आ॒क्षा॒णः । आन॑ट् । आष्ट॑ । आ॒पा॒नः । अश॑त् । नश॑त् । आ॒न॒शे । अश्नुत इति व्याप्तिकर्माणः १८

द॒भ्नोति॑ । श्नथ॑ति । ध्वर॑ति । धूर्व॑ति । वृ॒णक्ति॑ । वृ॒श्चति॑ । कृ॒णवति॑ । कृ॒न्तति॑ । श्वसि॑ति । नभ॑ते । अ॒र्दय॑ति । स्तृ॒णाति॑ । स्ने॒हय॑ति । या॒तय॑ति । स्फु॒रति॑ । स्फु॒लति॑ । निर्व॑पन्तु । अव॑तिरति । विया॑तः । आति॑रत् । त॒ळित् । आखण्डल । द्रू॒णाति॑ । र॒म्णाति॑ । शृ॒णाति॑ । श॒म्नाति॑ । तृ॒णेळ्हि॑ । ता॒ळ्हि । नितो॑शते । निब॑र्हयति । मि॒नाति॑ । मि॒नोति॑ । धमतीति वधकर्माणः १९

दि॒द्युत् । ने॒मिः । हे॒तिः । नमः॑ । प॒विः । सृ॒कः । वधः॑ । वज्रः॑ । अ॒र्कः । कुत्सः॑ । कुलि॑शः । तु॒ञ्जः । ति॒ग्मः । मे॒निः । स्वधि॑तिः । साय॑कः । परशुरिति वज्रस्य २०

इ॒र॒ज्यति॑ । पत्य॑ते । क्षय॑ति । राजतीति ऐश्वर्यकर्माणः २१

राष्ट्री॑ । अ॒र्यः । नि॒युत्वा॑न् । इन इन इतीश्वरस्य २२

इति निघण्टौ द्वितीयोऽध्यायः

अथ तृतीयोऽध्यायः

उ॒रु । तु॒वि । पु॒रु । भूरि॑ । शश्व॑त् । विश्व॑म् । परी॑णसा । व्या॒न॒शिः । श॒तम् । स॒हस्र॑म् । स॒लि॒लम् । कुविदिति बहोः १

ऋ॒हन् । ह्र॒स्वः । नि॒धृष्व॑ः । मा॒यु॒कः । प्र॒ति॒ष्ठा । कृ॒धु । व॒म्र॒कः । द॒भ्रम् । अ॒र्भ॒कः । क्षु॒ल्ल॒कः । अल्पकमिति ह्रस्वस्य २

महत् । ब्रध्नः । ऋष्वः । बृहत् । उक्षितः । तवसः । तविषः । महिषः । अभ्वः । ऋभुक्षाः । उक्षा । विहायाः । यह्वः । ववक्षिथ । विवक्षसे । अम्भृणः । माहिनः । गभीरः । ककुहः । रभसः । व्राधन् । विरप्शी । अद्भुतम् । बंहिष्ठः । बर्हिषीति महतः ३

गयः । कृदरः । गर्तः । हर्म्यम् । अस्तम् । पस्त्यम् । दुरोणे । नीळम् । दुर्याः । स्वसराणि । अमा । दमे । कृत्तिः । योनिः । सद्म । शरणम् । वरूथम् । छर्दिः । छदिः । छाया । शर्म । अज्मेति गृहाणाम् ४

इरज्यति । विधेम । सपर्यति । नमस्यति । दुवस्यति । ऋध्नोति । ऋणद्धि । ऋच्छति । सपति । विवासतीति परिचरणकर्माणः ५

शिम्बाता । शतरा । शातपन्ता । शिल्गुः । स्यूमकम् । शेवृधम् । मयः । सुग्म्यम् । सुदिनम् । शूषम् । शुनम् । शग्मम् । भेषजम् । जलाषम् । स्योनम् । सुम्नम् । शेवम् । शिवम् । शम् । कदिति सुखस्य ६

निर्णिक् । वव्रिः । वर्पः । वपुः । अमतिः । अप्सः । प्सुः । अप्नः पिष्टम् । पेशः । कृशनम् । मरुत् । अर्जुनम् । ताम्रम् । अरुषम् । शष्यमिति रूपस्य ७

अस्त्रेमा । अनेमा । अनेद्यः । अनवद्यः । अनभिशस्त्यः । उक्थ्यः । सुनीथः । पाकः । वामः । वयुनमिति प्रशस्यस्य ८

केतुः । केतः । चेतः । चित्तम् । ऋतुः । असुः । धीः ।

शची । माया । वयुनम् । अभिख्येति प्रज्ञायाः ९

बट् । श्रत् । सत्रा । अद्धा । इत्था । ऋतमिति सत्यस्य १०

चिक्यत् । चाकनत् । अचष्टम । चष्टे । वि चष्टे । विचर्षणिः । विश्वचर्षणिः । अवचाकशदिति पश्यतिकर्माणः ११

हिकम् । नुकम् । सुकम् । आहिकम् । आकीम् । नकिः । माकिः । नकीम् । आकृतमित्यामिश्राणि १२

इदमिव । इदं यथा । अग्निर्न ये । चतुरश्चिद्ददमानात् । ब्राह्मणा व्रतचारिणः । वृक्षस्य नु ते पुरुहूत वयाः । जार आ भगम् । मेषो भूतो३भि यन्नयः । तद्रूपः । तद्वर्णः । तद्वत् । तथेत्युपमाः १३

अर्चति । गायति । रेभति । स्तोभति । गूर्धयति । गृणाति । जरते । ह्वयते । नदति । पृच्छति । रिहति । धमति । कृपायति । कृपण्यति । पनस्यति । पनायते । वल्गूयति । मन्दते । भन्दते । छन्दति । छदयते । शशमानः । रञ्जयति । रजयति । शंसति । स्तौति । यौति । रौति । नौति । भनति । पणायति । पणते । सपति । पपृक्षाः । महयति । वाजयति । पूजयति । मन्यते । मदति । रसति । स्वरति । वेनति । मन्द्रयते । जल्पतीति चतुश्चत्वारिंशदर्चतिकर्माणः १४

विप्रः । विग्रः । गृत्सः । धीरः । वेनः । वेधाः । कण्वः । ऋभुः । नवेदाः । कविः । मनीषी । मन्धाता । विधाता । विपः । मनश्चित् । विपश्चित् । विपन्यवः । आकेनिपः । उशिजः । कीस्तासः । अद्धातयः । मतयः । मतुथाः । मेधाविन इति मेधाविनाम् । १५

रेभः । जरिता । कारुः । नदः । स्तामुः । कीरिः । गौः ।

सूरिः । नादः । छन्दः । स्तुप् । रुद्रः । कृपरायुरिति त्रयोदश स्तोतृनामानि १६

यज्ञः । वेनः । अध्वरः । मेधः । विदथः । नार्यः । सवनम् । होत्रा । इष्टिः । देवताता । मखः । विष्णुः । इन्दुः । प्रजापतिः । घर्म इति यज्ञस्य १७

भरताः । कुरवः । वाघतः । वृक्तबर्हिषः । यतस्रुचः । मरुतः । सबाधः । देवयव इत्यृत्विजाम् १८

ईमहे । यामि । मन्महे । दद्धि । शग्धि । पूर्धि । मिमिढ्ढि । मिमीहि । रिरिढ्ढि । रिरीहि । पीपरत् । यन्तारः । यन्धि । इषुध्यति । मदेमहि । मनामहे । मायत इति याच्ञाकर्माणः १९

दाति । दाशति । दासति । राति । रासति । पृणक्षि । पृणाति । शिक्षति । तुञ्जति । मंहत इति दानकर्माणः २०

परि स्रव । पवस्व । अभ्यर्ष । आशिष इति अध्येषणाकर्माणः २१

स्वपिति सस्तीति द्वौ स्वपितिकर्माणौ २२

कूपः । कातुः । कर्तः । वव्रः । काटः । स्वातः । अवतः । क्रिविः । सूदः । उत्सः । ऋश्यदात् । कारोतरात् । कुशयः । केवट इति कूपस्य २३

तृपुः । तक्वा । रिभ्वा । रिपुः । रिक्वा । रिहायाः । तायुः । तस्करः । वनर्गुः । हुरश्चित् । मुषीवान् । मलिम्लुचः । अघशंसः । वृक इति स्तेनस्य २४

निण्यम् । सस्वः । सनुतः । हिरुक् । प्रतीच्यम् । अपीच्यमिति निर्णीतान्तर्हितनामधेयानि २५

आके । पराके । पराचैः । आरे । परावत इति दूरस्य २६

प्रत्नम् । प्रदिवः । प्रवयाः । सनेमि । पूर्व्यम् । अह्नायेति पुराणस्य २७

नवम् । नूत्नम् । नूतनम् । नव्यम् । इदा । इदानीमिति नवस्य २८

प्रपित्वे । अभीके । दभ्रम् । अर्भकम् । तिरः । सतः । त्वः । नेमः । ऋक्षाः । स्तृभिः । वम्रीभिः । उपजिह्विका । ऊर्दरम् । कृदरम् । रम्भः । पिनाकम् । मेना । ग्नाः । शेपः । वैतसः । अया । एना । सिषक्तु । सचते । भ्यसते । रेजते इति द्विशः २९

स्वधे । पुरन्धी । धिषणे । रोदसी । क्षोणी । अम्भसी । नभसी । रजसी । सदसी । सद्मनी । घृतवती । बहुले । गभीरे । गम्भीरे । ओण्यौ । चम्वौ । पार्श्वौ । मही । उर्वी । पृथ्वी । अदिती । अही । दूरे अन्ते । अपारे अपारे इति द्यावापृथिव्योः ३०

इति निघण्टौ तृतीयोऽध्यायः

अथ चतुर्थोऽध्यायः

जहा । निधा । शिताम । मेहना । दमूनाः । मूषः । इषिरेण । कुरुतन । जठरे । तितउ । शिप्रे । मध्या । मन्दू । ईर्मान्तासः । कायमानः । लोधम् । शीरम् । विद्रधे । द्रुपदे । तुग्वनि । नंसन्ते । नसन्त । आहनसः । अद्मसत् । इष्मिणः

। वाहः । परितक्म्या । सुविते । दयते । नूचित् । नूच । दावने । अकूपारस्य । शिशीते । सुतुकः । सुप्रायणाः । अप्रायुवः । च्यवनः । रजः । हरः । जुहुरे । व्यन्तः । क्राणाः । वाशी । विषुणः । जामिः । पिता । शंयोः । अदितिः । एरिरे । जसुरिः । जरते । मन्दिने । गौः । गातुः । दंसयः । तूताव । चयसे । वियुते । ऋधक् । अस्याः । अस्य १

सस्निम् । वाहिष्ठः । दूतः । वावशानः । वार्यम् । अन्धः । असश्चन्ती । वनुष्यति । तरुष्यति । भन्दनाः । आहनः । नदः । सोमो अक्षाः । श्वात्रम् । ऊतिः । हासमाने । पड्भिः । समम् । द्विता । व्राः । वराहः । स्वसराणि । शर्याः । अर्कः । पविः । वक्षः । धन्व । सिनम् । इत्था । सचा । चित् । आ । द्युम्नम् । पवित्रम् । तोदः । खञ्जाः । शिपिविष्टः । विष्णुः । आघृणिः । पृथुज्रयाः । अथर्युम् । काणुका । अध्रिगुः । आङ्गूषः । आपान्तमन्युः । श्मशा । उर्वशी । वयुनम् । वाजपस्त्यम् । वाजगन्ध्यम् । गध्यम् । गधिता । कौरयाणः । तौरयाणः । अह्रयाणः । हरयाणः । आरितः । व्रन्दी । निष्षपी । तूर्णाशम् । क्षुम्पम् । निचुम्पुणः । पदिम् । पादुः । वृकः । जोषवाकम् । कृत्तिः । श्वघ्नी । समस्य । कुटस्य । चर्षणिः । शम्बः । केपयः । तूतुमाकृषे । अंसत्रम् । काकुदम् । बीरिटे । अच्छ । परि । ईम् । सीम् । एनम् । एनाम् सृणिः २

आशुशुक्षणिः । आशाभ्यः । काशिः । कुणारुम् । अलातृणः । सललूकम् । कत्पयम् । विस्रुहः । वीरुधः । नक्षद्दाभम् । अस्कृधोयुः । निशृम्भाः । बृबदुक्थम् । ऋदूदरः । ऋदूपे । पुलुकामः । असिन्वती । कपना । भार्ऋजीकः । रुजानाः ।

जूर्णिः । ओमना । उपलप्रक्षिणी । उपसि । प्रकलवित् । अभ्यर्धयज्वा । ईक्षे । क्षोणस्य । अस्मे । पाथः । सवीमनि । सप्रथाः । विदथानि । श्रायन्तः । आशीः । अजीगः । अमूरः । शशमानः । देवो देवाच्या कृपा । विजामातुः । ओमासः । सोमानम् । अनवायम् । किमीदिने । अमवान् । अमीवा । दुरितम् । अप्वा । अमतिः । श्रुष्टी । पुरन्धिः । रुशत् । रिशादसः । सुदत्रः । सुविदत्रः । आनुषक् । तुर्वणिः । निर्वणसे । असूर्त्ते सूर्त्ते । अम्यक् । यादृश्मिन् । जारयायि । अग्रिया । चनः । पचता । शुरुधः । अमिनः । जज्झतीः । अप्रतिष्कुतः । शाशदानः । सृप्रः । सुशिप्रः । शिप्रे । रंसु । द्विबर्हाः । अक्रः । उराणः । स्तियानाम् । स्तिपाः । जबारु । जरूथम् । कुलिशः । तुञ्जः । बर्हणा । ततनुष्टिम् । इलीबिशः । कियेधाः । भृमिः । विष्पितः । तुरीपम् । रास्पिनः । ऋञ्जतिः । ऋजुनीती । प्रतद्वसू । हिनोत । चोष्कूयमाणः । चोष्कूयते । सुमत् । दिविष्टिषु । दूतः । जिन्वति । अमत्रः । ऋचीषमः । अनर्शरातिम् । अनर्वा । असामि । गल्दया । जल्हवः । बकुरः । बेकनाटान् । अभिधेतन । अंहुरः । बतः । वाताप्यम् । चाकन् । रथर्यति । असक्राम् । आधवः । अनवब्रवः । सदान्वे । शिरिम्बिठः । पराशरः । क्रिविर्दती । करूलती । दनः । शरारुः । इदंयुः । कीकटेषु । बुन्दः । वृन्दम् । किः । उल्बम् । ऋबीसमृबीसम् ३

इति निघण्टौ चतुर्थोऽध्यायः

## अथ पञ्चमोऽध्यायः

अग्निः । जातवेदाः । वैश्वानर १

द्रविणोदाः । इध्मः । तनूनपात् । नराशंसः । इळः । बर्हिः

। द्वार॑ः । उ॒षासा॒नक्ता॑ । दैव्या॒ होता॑रा । तिस्रो दे॒वीः । त्वष्टा॑
। वन॒स्पतिः॑ । स्वाहाकृतय २

अश्वः॑ । श॒कुनिः॑ । म॒ण्डूकाः॑ । अ॒क्षाः । ग्रावा॑णः । ना॒रा॒शं॒सः
। रथः॑ । दु॒न्दु॒भिः । इ॒षु॒धिः । ह॒स्त॒घ्नः । अ॒भीश॑वः । धनुः॑
। ज्या । इषुः॑ । अ॒श्वाज॑नी । उ॒लूख॑लम् । वृ॒ष॒भः । द्रु॒घ॒णः
। पि॒तुः । न॒द्यः॑ । आपः॑ । ओष॑धयः । रात्रिः॑ । अ॒र॒ण्या॒नी
। श्र॒द्धा । पृ॒थि॒वी । अप्वा॑ । अ॒ग्नायी॑ । उ॒लूख॑ल॒मुस॑ले ।
ह॒वि॒र्धाने॑ । द्यावा॑पृथि॒वी । विपा॑ट्छु॒तु॒द्री । आर्त्नी॑ । शु॒नासीरौ॑
। दे॒वी जोष्ट्री॑ । देवी ऊर्जाहुती ३

वा॒युः । वरु॑णः । रु॒द्रः । इन्द्रः॑ । प॒र्जन्यः॑ । बृह॒स्पतिः॑ ।
ब्रह्म॑ण॒स्पतिः॑ । क्षेत्र॑स्य॒ पतिः॑ । वास्तो॒ष्पतिः॑ । वाच॒स्पतिः॑ ।
अ॒पां नपा॑त् । य॒मः । मि॒त्रः । कः । सर॑स्वान् । वि॒श्वक॑र्मा
। तार्क्ष्यः॑ । म॒न्युः । द॒धि॒क्राः । स॒वि॒ता । त्वष्टा॑ । वातः॑
। अ॒ग्निः । वे॒नः । अ॒सुनी॑तिः । ऋ॒तः । इन्दुः॑ । प्रजाप॑तिः
। अहिः॑ । अहि॑र्बु॒ध्न्यः॑ । सु॒प॒र्णः॑ । पुरूरवा ४

श्ये॒नः । सोमः॑ । च॒न्द्रमाः॑ । मृ॒त्युः । वि॒श्वान॑रः । धा॒ता ।
वि॒धा॒ता । म॒रुतः॑ । रु॒द्राः । ऋ॒भवः॑ । अङ्गि॑रसः । पि॒तरः॑ ।
अथर्वा॑णः । भृग॑वः । आ॒प्त्याः । अदि॑तिः । स॒रमा॑ । सर॑स्वती
। वाक् । अनु॑मतिः । रा॒का । सि॒नी॒वा॒ली । कु॒हूः । य॒मी
। उ॒र्वशी॑ । पृ॒थि॒वी । इ॒न्द्रा॒णी । गौ॒री । गौः॑ । धे॒नुः ।
अघ्न्या॑ । प॒थ्या॑ । स्व॒स्तिः । उ॒षाः । इळा॑ । रोदसी ५

अ॒श्विनौ॑ । उ॒षाः । सू॒र्या । वृ॒षा॒क॒पायी॑ । स॒र॒ण्यूः । त्वष्टा॑
। स॒वि॒ता । भगः॑ । सूर्यः॑ । पू॒षा । विष्णुः॑ । वि॒श्वान॑रः ।
वरु॑णः । के॒शी । के॒शिनः॑ । वृ॒षाक॑पिः । य॒मः । अ॒ज एक॑पात्

। पृथिवी । समुद्रः । अथर्वा । मनुः । दध्यङ् । आदित्याः । सप्तऋषयः । देवाः । विश्वेदेवाः । साध्याः । वसवः । वाजिनः । देवपत्न्यो देवपत्न्य ६

इति निघण्टौ पञ्चमोऽध्यायः

# श्रीयास्कमुनिविरचितं निरुक्तं प्रारभ्यते

## अथ प्रथमोऽध्यायः

समाम्नायः समाम्नातः । स व्याख्यातव्यः । तमिमं समाम्नायं निघण्टव इत्याचक्षते । निघण्टवः कस्मात् । निगमा इमे भवन्ति । छन्दोभ्यः समाहृत्य समाहृत्य समाम्नाताः । ते निगन्तव एव सन्तो निगमनान्निघण्टव उच्यन्त इत्यौपमन्यवः । अपि वा हननादेव स्युः । समाहता भवन्ति । यद्वा समाहृता भवन्ति ।

तद् यानि चत्वारि पदजातानि नामाख्याते चोपसर्गनिपाताश्च तानीमानि भवन्ति । तत्रैतन्नामाख्यातयोर्लक्षणं प्रदिशन्ति । भावप्रधानमाख्यातम् । सत्त्वप्रधानानि नामानि । तद् यत्रोभे भावप्रधाने भवतः पूर्वापरीभूतं भावमाख्यातेनाचष्टे । व्रजति पचतीति । उपक्रमप्रभृत्यपवर्गपर्यन्तं मूर्तं सत्त्वभूतं सत्त्वनामभिः । व्रज्या पक्तिरिति । अद इति सत्त्वानामुपदेशः । गौरश्वः पुरुषो हस्तीति । भवतीति भावस्य । आस्ते शेते व्रजति तिष्ठतीति । इन्द्रियनित्यं वचनमौदुम्बरायणः १

तत्र चतुष्ट्वं नोपपद्यते । अयुगपदुत्पन्नानां वा शब्दानामितरेतरोपदेशः । शास्त्रकृतो योगश्च । व्याप्तिमत्त्वात्तु शब्दस्याणीयस्त्वाच्च शब्देन संज्ञाकरणं व्यवहारार्थं लोके । तेषां मनुष्यवद् देवताभिधानम् । पुरुषविद्यानित्यत्वात् कर्मसंपत्तिर्मन्त्रो वेदे ।

षड्भावविकारा भवन्तीति वार्ष्यायणिः । जायतेऽस्ति विपरिणमते वर्धतेऽपक्षीयते विनश्यतीति । जायत इति पूर्वभावस्यादिमाचष्टे । नापरभावमाचष्टे न प्रतिषेधति । अस्तीत्युत्पन्नस्य सत्त्वस्यावधारणम् । विपरिणमत इत्यप्रच्यवमानस्य तत्त्वाद्

विकारम् । वर्धत इति स्वाङ्गाभ्युच्चयम् । सांयौगिकानां वार्थानाम् । वर्धते विजयेनेति वा । वर्धते शरीरेणेति वा । अपक्षीयत इत्येतेनैव व्याख्यातः प्रतिलोमम् ।
विनश्यतीत्यपरभावस्यादिमाचष्टे । न पूर्वभावमाचष्टे न प्रतिषेधति २

अतोऽन्ये भावविकारा एतेषामेव विकारा भवन्तीति ह स्माह । ते यथावचनमभ्यूहितव्याः ।
न निर्बद्धा उपसर्गा अर्थान्निराहुरिति शाकटायनः ।
नामाख्यातयोस्तु कर्मोपसंयोगद्योतका भवन्ति । उच्चावचाः पदार्था भवन्तीति गार्ग्यः । तद् य एषु पदार्थः प्राहुरिमे तं नामाख्यातयोरर्थविकरणम् ।
आ इत्यर्वागर्थे । प्र परा इत्येतस्य प्रातिलोम्यम् । अभि इत्याभिमुख्यम् । प्रति इत्येतस्य प्रातिलोम्यम् । अति सु इत्यभिपूजितार्थे । निर् दुर् इत्येतयोः प्रातिलोम्यम् । नि अव इति विनिग्रहार्थीया । उद् इत्येतयोः प्रातिलोम्यम् । सम् इत्येकीभावम् । वि अप इत्येतस्य प्रातिलोम्यम् । अनु इति सादृश्यापरभावम् । अपि इति संसर्गम् । उप इत्युपजनम् । परि इति सर्वतोभावम् । अधि इत्युपरिभावमैश्वर्यं वा ।
एवमुच्चावचानर्थान्प्राहुः । त उपेक्षितव्याः ३

अथ निपाता उच्चावचेष्वर्थेषु निपतन्ति । अप्युपमार्थे । अपि कर्मोपसंग्रहार्थे । अपि पदपूरणाः । तेषामेते चत्वार उपमार्थे भवन्ति ।
इवेति भाषायां च । अन्वध्यायं च ।

अ॒ग्निरि॑व । इन्द्र॑ इव । इति ।

नेति प्रतिषेधार्थीयो भाषायाम् । उभयमन्वध्यायम् ।

नेन्द्रं देवममंसत ।

इति प्रतिषेधार्थीयः । पुरस्तादुपाचारस्तस्य यत्प्रतिषेधति ।

दुर्मदासो न सुरायाम् ।

इत्युपमार्थीयः । उपरिष्टादुपाचारस्तस्य येनोपमिमीते ।
चिदित्येषोऽनेककर्मा । आचार्यश्चिदिदं ब्रूयात् । इति पूजायाम्
। आचार्यः कस्मादाचार्य आचारं ग्राहयति । आचिनोत्यर्थान् ।
आचिनोति बुद्धिमिति वा । दधिचित् । इत्युपमार्थे ।
कुल्माषांश्चिदाहर । इत्यवकुत्सिते । कुल्माषाः कुलेषु सीदन्ति
।
नु इत्येषोऽनेककर्मा । इदं नु करिष्यति । इति हेत्वपदेशे ।
कथं नु करिष्यति । इत्यनुपृष्टे । नन्वेतदकार्षीत् । इति च ।
अथाप्युपमार्थे भवति ।

वृक्षस्य नु ते पुरुहूत वयाः ।

वृक्षस्येव ते पुरुहूत शाखाः । वयाः शाखा वेतेः । वातायना
भवन्ति । शाखाः खशयाः । शक्नोतेर्वा ।
अथ यस्यागमादर्थपृथक्त्वमह विज्ञायते न त्वौद्देशिकमिव विग्रहेण
पृथक्त्वात्स कर्मोपसंग्रहः ।
चेति समुच्चयार्थ उभाभ्यां संप्रयुज्यते ।

अहं च त्वं च वृत्रहन् । इति ।

एतस्मिन्नेवार्थे ।

देवेभ्यश्च पितृभ्य आ । इत्याकारः ।

वेति विचारणार्थे ।

हन्ताहं पृथिवीमिमां न दधानीह वेह वा । इति ।

अथापि समुच्चयार्थे भवति ४

वायुर्वा त्वा मनुर्वा त्वा । इति ।
अह इति च ह इति च विनिग्रहार्थीया । पूर्वेण संप्रयुज्येते ।
अयमहेदं करोत्वयमिदम् । इदं ह करिष्यतीदं न करिष्यतीति ।
अथाप्युकार एतस्मिन्नेवार्थ उत्तरेण । मृषेमे वदन्ति सत्यमु ते
वदन्तीति । अथापि पदपूरणः ।
इदमु । तदु ।
हीत्येषोऽनेककर्मा । इदं हि करिष्यति । इति हेत्वपदेशे ।
कथं हि करिष्यति । इत्यनुपृष्टे । कथं हि व्याकरिष्यति ।
इत्यसूयायाम् ।
किलेति विद्याप्रकर्षे । एवं किलेति । अथापि न ननु इत्येताभ्यां
संप्रयुज्यतेऽनुपृष्टे । न किलैवम् । ननु किलैवम् ।
मेति प्रतिषेधे । मा कार्षीः । मा हार्षीरिति च ।
खल्विति च । खलु कृत्वा । खलु कृतम् । अथापि पदपूरणः
। एवं खलु तद् बभूवेति ।
शश्वदिति विचिकित्सार्थीयो भाषायाम् । शश्वदेवम् । इत्यनुपृष्टे
। एवं शश्वत् । इत्यस्वयं पृष्टे ।
नूनमिति विचिकित्सार्थीयो भाषायाम् । उभयमन्वध्यायं
विचिकित्सार्थीयश्च पदपूरणश्च ।
अगस्त्य इन्द्राय हविर्निरूप्य मरुद्भ्यः संप्रदित्सांचकार । स इन्द्र
एत्य परिदेवयांचक्रे ५
न नूनमस्ति नो श्वः कस्तद्वेद यदद्भुतम् ।
अन्यस्य चित्तमभि संचरेण्यमुताधीतं विनश्यति ॥

न नूनमस्त्यद्यतनम् । नो एव श्वस्तनम् । अद्यास्मिन् द्यवि ।
द्युरित्यह्नो नामधेयम् । द्योतत इति सतः । श्व उपाशंसनीयः
कालः । ह्यो हीनः कालः । कस्तद्वेद यदद्भुतम् । कस्तद्वेद
यदभूतम् । इदमपीतरदद्भुतमभूतमिव । अन्यस्य चित्तम् ।
अभिसंचरेण्यमभिसंचारि । अन्यो नानेयः । चित्तं चेततेः ।
उताधीतं विनश्यतीति । अप्याध्यातं विनश्यति आध्यातमभिप्रेतम्
। अथापि पदपूरणः ६

नूनं सा ते प्रति वरं जरित्रे दुहीयदिन्द्र दक्षिणा मघोनी ।
शिक्षा स्तोतृभ्यो माति धग्भगो नो बृहद्वदेम विदथे सुवीराः ॥

सा ते प्रतिदुग्धां वरं जरित्रे । वरो वरयितव्यो भवति । जरिता
गरिता ।
दक्षिणा मघोनी मघवती । मघमिति धननामधेयम् ।
मंहतेर्दानकर्मणः । दक्षिणा दक्षतेः समर्धयतिकर्मणः । व्यृद्धं
समर्धयतीति । अपि वा प्रदक्षिणागमनात् । दिशमभिप्रेत्य ।
दिग्घस्तप्रकृतिर्दक्षिणो हस्तः । दक्षतेरुत्साहकर्मणः । दाशतेर्वा
स्याद् दानकर्मणः । हस्तो हन्तेः । प्राशुर्हनने । देहि स्तोतृभ्यः
कामान् । मास्मानतिदंहीः । मास्मानतिहाय दाः । भगो
नोऽस्तु । बृहद्वदेम स्वे वेदने । भगो भजतेः । बृहदिति महतो
नामधेयम् । परिवृहळं भवति । वीरवन्तः कल्याणवीरा वा ।
वीरो वीरयत्यमित्रान् । वेतेर्वा स्याद्गतिकर्मणः वीरयतेर्वा ।
सीमिति परिग्रहार्थीयो वा पदपूरणो वा ।

प्र सीमादित्यो असृजत् ।
प्रासृजदिति वा । प्रासृजत् सर्वत इति वा ।

वि सीमतः सुरुचो वेन आवः । इति च ।

व्यवृणोत् सर्वत आदित्यः । सुरुच आदित्यरश्मयः । सुरोचनात् । अपि वा सीमेत्येतदनर्थकमुपबन्धमाददीत पंचमीकर्माणम् । सीम्नः सीमतः सीमातो मर्यादातः । सीमा मर्यादा । विषीव्यति देशाविति । त्व इति विनिग्रहार्थीयम् । सर्वनामानुदात्तम् । अर्धनामेत्येके ७

ऋचां त्वः पोषमास्ते पुपुष्वान्गायत्रं त्वो गायति शक्वरीषु ।
ब्रह्मा त्वो वदति जातविद्यां यज्ञस्य मात्रां वि मिमीत उ त्वः ॥

इत्यृत्विक्कर्मणां विनियोगमाचष्टे । ऋचामेकः पोषमास्ते पुपुष्वान् । होता । ऋगर्चनी । गायत्रमेको गायति शक्वरीषु । उद्गाता । गायत्रं गायतेः स्तुतिकर्मणः । शक्वर्य ऋचः । शक्नोतेः । तद् यदाभिर्वृत्रमशकद्धन्तुं तच्छक्वरीणां शक्वरीत्वम् । इति विज्ञायते । ब्रह्मैको जाते जाते विद्यां वदति । ब्रह्मा । सर्वविद्यः । सर्वं वेदितुमर्हति । ब्रह्मा परिवृह्ळः श्रुततः । ब्रह्म परिवृह्ळं सर्वतः । यज्ञस्य मात्रां विमिमीत एकः । अध्वर्युः । अध्वर्युरध्वरयुः । अध्वरं युनक्ति । अध्वरस्य नेता । अध्वरं कामयत इति वा । अपि वाधीयाने युरुपबन्धः । अध्वर इति यज्ञनाम । ध्वरतिर्हिंसाकर्मा । तत्प्रतिषेधः । निपात इत्येके । तत्कथमनुदात्तप्रकृति नाम स्यात् । दृष्टव्ययं तु भवति ।

उत त्वं सख्ये स्थिरपीतमाहुः । इति द्वितीयायाम् ।
उतो त्वस्मै तन्वं १ वि सस्रे । इति चतुर्थ्याम् ।

अथापि प्रथमाबहुवचने ८

अक्षण्वन्तः कर्णवन्तः सखायो मनोजवेष्वसमा बभूवुः ।
आदघ्नास उपकक्षास उ त्वे ह्रदा इव स्नात्वा उ त्वे ददृश्रे ॥

अक्षिमन्तः कर्णवन्तः सखायः । अक्षि चष्टेः ।
अनक्तेरित्याग्रायणः ।
तस्मादेते व्यक्ततरे इव भवतः ।
इति ह विज्ञायते । कर्णः कृन्ततेः । निकृत्तद्वारो भवति ।
ऋच्छतेरित्याग्रायणः ।
ऋच्छन्तीव खे उदगन्ताम् ।
इति ह विज्ञायते । मनसां प्रजवेष्वसमा बभूवुः । आस्यदघ्ना
अपरे । उपकक्षदघ्ना अपरे । आस्यमस्यतेः । आस्यन्दत
एनदन्नमिति वा । दघ्नं दघ्यतेः स्रवतिकर्मणः । दस्यतेर्वा स्यात्
। विदस्ततरं भवति । प्रस्नेया ह्रदा इवैके ददृशिरे । प्रस्नेया
स्नानार्हाः । ह्रदो ह्रादतेः शब्दकर्मणः । ह्लादतेर्वा
स्याच्छीतीभावकर्मणः ।
अथापि समुच्चयार्थे भवति ।
पर्याया इव त्वदाश्विनम् ।
आश्विनं च पर्यायाश्चेति ।
अथ ये प्रवृत्तेऽर्थेऽमिताक्षरेषु ग्रन्थेषु वाक्यपूरणा आगच्छन्ति
पदपूरणास्ते मिताक्षरेष्वनर्थकाः । कमीमिद्विति ९

निष्ट्वक्त्रासश्चिदिन्नरो भूरितोका वृकादिव ।
बिभ्यस्यन्तो ववाशिरे शिशिरं जीवनाय कम् ॥

शिशिरं जीवनाय । शिशिरं शृणातेः शम्नातेर्वा ।

एमेनं सृजता सुते ।

आसृजतैनं सुते ।

तमिद्वर्धन्तु नो गिरः ।

तं वर्धयन्तु नो गिरः स्तुतयः । गिरो गृणातेः ।
अ॒यमु॑ ते॒ सम॑तसि ।

अयं ते समतसि ।
इवोऽपि दृश्यते । सु विदुरिव । सु विज्ञायेते इव ।
अथापि नेत्येष इदित्येतेन संप्रयुज्यते परिभये १०

ह॒विर्भि॒रेके॒ स्व॑रि॒तः स॑चन्ते सु॒न्वन्त॒ एके॒ सव॑नेषु॒ सोमा॑न् ।
शची॒र्मद॑न्त उ॒त दक्षि॑णाभि॒र्नेज्जि॒ह्मायन्त्यो॒ नर॑कं॒ पता॑म । इति

नरकं न्यरकं नीचैर्गमनम् । नास्मिन् रमणं स्थानमल्पमप्यस्तीति वा ।
अथापि न चेत्येष इदित्येतेन संप्रयुज्यतेऽनुपृष्टे । न चेत् सुरां पिबन्तीति ।
सुरा सुनोतेः । एवमुच्चावचेष्वर्थेषु निपतन्ति । त उपेक्षितव्याः ११

इतीमानि चत्वारि पदजातान्यनुक्रान्तानि । नामाख्याते चोपसर्गनिपाताश्च ।
तत्र नामान्याख्यातजानीति शाकटायनो नैरुक्तसमयश्च । न सर्वाणीति गार्ग्यो वैयाकरणानां चैके तद् यत्र स्वरसंस्कारौ समर्थौ प्रादेशिकेन विकारेणान्वितौ स्याताम् । संविज्ञातानि तानि यथा गौरश्वः पुरुषो हस्तीति ।
अथ चेत् सर्वाण्याख्यातजानि नामानि स्युर्यः कश्च तत्कर्म कुर्यात् सर्वं तत् सत्त्वं तथाचक्षीरन् । यः कश्चाध्वानमश्नुवीताश्वः स वचनीयः स्यात् । यत् किञ्चित्तृंद्यात् तृणं तत् ।
अथापि चेत् सर्वाण्याख्यातजानि नामानि स्युर्यावद्भिर्भावैः संप्रयुज्येत तावद्भ्यो नामधेयप्रतिलम्भः स्यात् । तत्रैवं स्थूणा

दरशया वा संजनी च स्यात्  १२

अथापि य एषां न्यायवान् कार्मनामिकः संस्कारो यथा चापि प्रतीतार्थानि
स्युस्तथैनान्याचक्षीरन् । पुरुषं पुरिशय इत्याचक्षीरन् ।
अष्टेत्यश्वम् । तर्दनमिति तृणम् । अथापि
निष्पन्नेऽभिव्याहारेऽभिविचारयन्ति । प्रथनात्पृथिवीत्याहुः । क
एनामप्रथयिष्यत् । किमाधारश्चेति ।
अथानन्वितेऽर्थेऽप्रादेशिके विकारे पदेभ्यः पदेतरार्धान्त्संचस्कार
शाकटायनः ।
एतेः कारितं च यकारादिं चान्तकरणमस्तेः शुद्धं च सकारादिं च ।
अथापि सत्त्वपूर्वो भाव इत्याहुः । अपरस्माद्भावात् पूर्वस्य प्रदेशो
नोपपद्यत इति । तदेतन्नोपपद्यते  १३

यथो हि नु वा एतत् तद् यत्र स्वरसंस्कारौ समर्थौ प्रादेशिकेन
विकारेणान्वितौ स्यातां सर्वं प्रादेशिकमित्येवं सत्यनुपालम्भ एष
भवति ।
यथो एतद् यः कश्च तत्कर्म कुर्यात् सर्वं तत् सत्त्वं तथाचक्षीरन्निति
पश्यामः समानकर्मणां नामधेयप्रतिलम्भमेकेषां नैकेषां यथा तक्षा
परिव्राजको जीवनो भूमिज इति ।
एतेनैवोत्तरः प्रत्युक्तः ।
यथो एतद् यथा चापि प्रतीतार्थानि स्युस्तथैनान्याचक्षीरन्निति
सन्त्यल्पप्रयोगाः कृतोऽप्यैकपदिका यथा व्रततिर्दमूना जाट्य
आट्णारो जागरूको दर्विहोमीति ।
यथो एतन्निष्पन्नेऽभिव्याहारेऽभिविचारयन्तीति भवति हि
निष्पन्नेऽभिव्याहारे योगपरीष्टिः । प्रथनात्पृथिवीत्याहुः । क
एनामप्रथयिष्यत् किमाधारश्चेति । अथ वै दर्शनेन पृथुः ।

अप्रथिता चेदप्यन्यैः । अथाप्येवं सर्व एव दृष्टप्रवादा उपालभ्यन्ते ।
यथो एतत्पदेभ्यः पदेतरार्धान्त्संचस्कारेति योऽनन्वितेऽर्थे संचस्कार
स तेन गर्ह्यः । सैषा पुरुषगर्हा न शास्त्रगर्हा इति ।
यथो एतदपरस्माद् भावात्पूर्वस्य प्रदेशो नोपपद्यत इति पश्यामः
पूर्वोत्पन्नानां सत्त्वानामपरस्माद्भावान्नामधेयप्रतिलम्भमेकेषां नैकेषां
यथा बिल्वादो लम्बचूडक इति । बिल्वं भरणाद्वा भेदनाद्वा १४

अथापीदमन्तरेण मन्त्रेष्वर्थप्रत्ययो न विद्यते । अर्थमप्रतियतो
नात्यन्तं स्वरसंस्कारोद्देशः । तदिदं विद्यास्थानं व्याकरणस्य
कार्त्स्न्यम् । स्वार्थसाधकं च ।
यदि मन्त्रार्थप्रत्ययायानर्थकं भवतीति कौत्सः । अनर्थका हि
मन्त्राः । तदेतेनोपेक्षितव्यम् ।
नियतवाचो युक्तयो नियतानुपूर्व्या भवन्ति ।
अथापि ब्राह्मणेन रूपसंपन्ना विधीयन्ते ।

उ॒रु प्र॑थस्व । इति प्रथयति ।

प्रोहाणि । इति प्रोहति ।
अथाप्यनुपपन्नार्था भवन्ति ।

ओष॑धे॒ त्राय॑स्वैनम् ।
स्वधि॑ते॒ मैनं॑ हिंसीः । इत्याह हिंसन् ।

अथापि विप्रतिषिद्धार्था भवन्ति ।

एक॑ ए॒व रु॒द्रोऽव॑तस्थे॒ न द्वि॒तीयः॑ ।
असं॑ख्याता स॒हस्रा॑णि ये रु॒द्रा अधि॒ भूम्या॑म् ।
अ॒श॒त्रुरि॑न्द्र जज्ञिषे ।
श॒तं सेना॑ अजयत् सा॒कमिन्द्रः॑ । इति ।

अथापि जानन्तं संप्रेष्यति ।
अग्नये समिध्यमानायानुब्रूहि । इति ।
अथाप्याहादितिः सर्वमिति ।

अदितिर्द्यौरदितिरन्तरिक्षम् । इति ।

तदुपरिष्टाद् व्याख्यास्यामः ।
अथाप्यविस्पष्टार्था भवन्ति ।

अम्यक् । यादृश्मिन् । जारयायि । काणुका । इति १५

अर्थवन्तः शब्दसामान्यात् ।
एतद्वै यज्ञस्य समृद्धं यद्रूपसमृद्धं यत्कर्म क्रियमाणमृग्यजुर्वाभिवदति । इति च ब्राह्मणम् ।

क्रीळन्तौ पुत्रैर्नप्तृभिः । इति ।

यथो एतन्नियतवाचो युक्तयो नियतानुपूर्व्या भवन्तीति लौकिकेष्वप्येतत् । यथा । इन्द्राग्नी । पितापुत्रौ । इति ।
यथो एतद् ब्राह्मणेन रूपसंपन्ना विधीयन्त इत्युदितानुवादः स भवति ।
यथो एतदनुपपन्नार्था भवन्तीत्याम्नायवचनादहिंसा प्रतीयेत ।
यथो एतद् विप्रतिषिद्धार्था भवन्तीति लौकिकेष्वप्येतत् । यथा । असपत्नोऽयं ब्राह्मणः । अनमित्रो राजा । इति ।
यथो एतज्जानन्तं संप्रेष्यतीति जानन्तमभिवादयते । जानते मधुपर्कं प्राह इति ।
यथो एतददितिः सर्वमिति लौकिकेष्वप्येतत् । यथा । सर्वरसा अनुप्राप्ताः पानीयम् । इति ।
यथो एतदविस्पष्टार्था भवन्तीति नैष स्थाणोरपराधो यदेनमन्धो न

पश्यति ।

पुरुषापराधः स भवति । यथा जानपदीषु विद्यातः पुरुषविशेषो भवति पारोवर्यवित्सु तु खलु वेदितृषु भूयोविद्यः प्रशस्यो भवति १६

अथापीदमन्तरेण पदविभागो न विद्यते ।

अवसायं पद्वते रुद्र मृळ । इति ।

पद्वदवसं गावः पथ्यदनम् । अवतेर्गत्यर्थस्यासो नामकरणः । तस्मान्नावगृह्णन्ति ।

अव सायाश्वान् । इति ।

स्यतिरुपसृष्टो विमोचने । तस्मादवगृह्णन्ति ।

दूतो निर्ऋत्या इदमा जगाम । इति ।

पंचम्यर्थप्रेक्षा वा । षष्ठ्यर्थप्रेक्षा वा । आःकारान्तम् ।

परो निर्ऋत्या आ चक्ष्व । इति ।

चतुर्थ्यर्थप्रेक्षा । ऐकारान्तम् ।

परः सन्निकर्षः संहिता । पदप्रकृतिः संहिता । पदप्रकृतीनि सर्वचरणानां पार्षदानि ।

अथापि याज्ञे दैवतेन बहवः प्रदेशा भवन्ति । तदेतेनोपेक्षितव्यम् । ते चेद्
ब्रूयर्लिङ्गज्ञा अत्र स्म इति ।

इन्द्रं न त्वा शवसा देवता वायुं पृणन्ति । इति ।

वायुलिङ्गं चेन्द्रलिङ्गं चाग्नेये मन्त्रे ।

अ॒ग्निरि॑व मन्यो त्विषि॒तः स॑हस्व । इति ।

तथाग्निर्मान्यवे मन्त्रे । त्विषितो ज्वलितः । त्विषिरित्यप्यस्य दीप्तिनाम भवति ।
अथापि ज्ञानप्रशंसा भवति । अज्ञाननिन्दा च १७

स्था॒णुर॒यं भा॑रह॒ारः कि॒लाभू॑द॒धीत्य॒ वेद॒ं न वि॑जा॒नाति॒ योऽर्थम् ।
योऽर्थज्ञ॒ इत्स॒कल॑ं भ॒द्रम॑श्नु॒ते नाक॑मेति॒ ज्ञान॑विधूतपाप्मा ॥
यद् गृ॑ही॒तम॑विज्ञा॒तं नि॒गदे॑नैव॒ शब्द्य॑ते ।
अन॑ग्ना॒विव॑ शुष्कै॒धो न॒ तज्ज्व॑लति॒ कर्हि॑चित् ॥

स्थाणुस्तिष्ठतेः । अर्थोऽर्तेः । अरणस्थो वा १८

उ॒त त्व॒ः पश्य॒न्न द॑दर्श॒ वाच॑मु॒त त्व॑ः शृ॒ण्वन्न शृ॑णोत्येनाम् ।
उ॒तो त्व॑स्मै त॒न्व॑ं॒ वि स॑स्रे जा॒येव॒ पत्य॑ उश॒ती सु॒वासा॑ः ॥

अप्येकः पश्यन्न पश्यति वाचम् । अपि च शृण्वन्न शृणोत्येनाम् ।
इत्यविद्वांसमाहार्धम् । अप्येकस्मै तन्वं विसस्र इति स्वमात्मानं विवृणुते । ज्ञानं प्रकाशनमर्थस्याह । अनया वाचा ।
उपमोत्तमया वाचा । जायेव पत्ये कामयमाना सुवासाः
ऋतुकालेषु सुवासाः कल्याणवासाः कामयमानाः । ऋतुकालेषु यथा स एनां पश्यति स शृणोति । इत्यर्थज्ञप्रशंसा । तस्योत्तरा भूयसे निर्वचनाय १९

उ॒त त्व॑ं स॒ख्ये स्थि॒रपी॑तमाहु॒र्नैन॑ं हिन्व॒न्त्यपि॒ वाजि॑नेषु ।
अधे॑न्वा चरति मा॒यये॒ष वाच॑ं शुश्रु॒वाँ अ॑फ॒लाम॑पु॒ष्पाम् ॥

अप्येकं वाक्सख्ये । स्थिरपीतमाहू रममाणं विपीतार्थम् ।
देवसख्ये । रमणीये स्थान इति वा । विज्ञातार्थम् । यं नाप्नुवन्ति वाग्ज्ञेयेषु बलवत्स्वपि । अधेन्वा ह्येष चरति मायया ।

वाक्प्रतिरूपया । नास्मै कामान्दुग्धे वाग्दोह्यान् देवमनुष्यस्थानेषु
यो वाचं श्रुतवान् भवत्यफलामपुष्पामिति । अफलास्मा अपुष्पा
वाग्भवतीति वा । किंचित्पुष्पफलेति वा । अर्थं वाचः
पुष्पफलमाह । याज्ञदैवते पुष्पफले । देवताध्यात्मे वा ।
साक्षात्कृतधर्माण ऋषयो बभूवुः । तेऽवरेभ्योऽसाक्षात्कृतधर्मभ्य
उपदेशेन मन्त्रान्संप्रादुः । उपदेशाय ग्लायन्तोऽवरे
बिल्मग्रहणायेमं ग्रन्थं समाम्नासिषुः । वेदं च वेदाङ्गानि च ।
विल्मं भिल्मं भासनमिति वा ।
एतावन्तः समानकर्माणो धातवः । धातुर्दधातेः । एतावन्त्यस्य
सत्त्वस्य नामधेयानि । एतावतामर्थानामिदमभिधानम् ।
नैघंटुकमिदं देवतानाम् । प्राधान्येनेदमिति । तद् यदन्यदैवते
मन्त्रे निपतति नैघंतुकं तत् ।

अश्वं न त्वा वारवन्तम् ।

अश्वमिव त्वा वालवन्तम् । वाला दंशवारणार्था भवन्ति । दंशो
दशतेः ।

मृगो न भीमः कुचरो गिरिष्ठाः ।

मृग इव भीमः कुचरो गिरिष्ठाः । मृगो मार्ष्टेर्गतिकर्मणः । भीमो
बिभ्यत्यस्मात् ।
भीष्मोऽप्येतस्मादेव । कुचर इति चरति कर्म कुत्सितम् । अथ
चेद् देवताभिधानम् ।
क्वायं न चरतीति । गिरिष्ठा गिरिस्थायी । गिरिः पर्वतः ।
समुद्गीर्णो भवति । पर्ववान् पर्वतः । पर्व पुनः पृणातेः प्रीणातेर्वा
। अर्धमासपर्व । देवानस्मिन्प्रीणन्तीति । तत्
प्रकृतीतरत्सन्धिसामान्यात् । मेघस्थायि । मेघोऽपि

गिरिरेतस्मादेव ।
तद् यानि नामानि प्राधान्यस्तुतीनां देवतानां तद् दैवतमित्याचक्षते
। तदुपरिष्टाद् व्याख्यास्यामः । नैघण्टुकानि नैगमानीहेह २०

समाम्नायस्तत्रचतुष्ट्वमतोऽन्येऽथ निपाता वायुर्वात्वा न नूनं नूनं सा त
ऋृचान्त्वोऽक्षण्वन्तो निष्ट्वक्त्रासो हविर्भिरितीमान्यथापि यो यथो हि
न्वथापीदमर्थवन्तोऽथापीदं स्थाणुरयमुत त्वः पश्यन्नुत त्वं सख्ये
विंशतिः ॥

इति निरुक्ते पूर्वषट्के प्रथमोऽध्यायः समाप्तः

# अथ द्वितीयोऽध्यायः

अथ निर्वचनम् । तद्येषु पदेषु स्वरसंस्कारौ समर्थौ प्रादेशिकेन विकारेणान्वितौ स्यातां तथा तानि निर्ब्रूयात् ।
अथानन्वितेऽर्थेऽप्रादेशिके विकारेऽर्थनित्यः परीक्षेत ।
केनचिद्वृत्तिसामान्येन । अविद्यमाने सामान्येऽप्यक्षरवर्णसामान्यान्निर्ब्रूयात् । न त्वेव न निर्ब्रूयात् । न संस्कारमाद्रियेत । विशयवत्यो हि वृत्तयो भवन्ति । यथार्थं विभक्तीः सन्नमयेत् ।
प्रत्तमवत्तमिति धात्वादी एव शिष्येते ।
अथाप्यस्तोर्निवृत्तिस्थानेष्वादिलोपो भवति । स्तः । सन्तीति ।
अथाप्यन्तलोपो भवति । गत्वा । गतमिति ।
अथाप्युपधालोपो भवति । जग्मतुः । जग्मुरिति ।
अथाप्युपधाविकारो भवति । राजा । दण्डीति । अथापि वर्णलोपो भवति । तत्त्वा यामि । इति । अथापि द्विवर्णलोपः । तृच इति । अथाप्यादिविपर्ययो भवति । ज्योतिः । घनः । बिन्दुः । वाट्य इति । अथाप्याद्यन्तविपर्ययो भवति । स्तोकाः । रज्जुः । सिकताः । तर्क्विति ।
अथाप्यन्तव्यापत्तिर्भवति १

ओघः । मेघः । नाधः । गाधः । वधूः । मध्विति ।
अथापि वर्णोपजनः । आस्थत् । द्वारः । भरूजेति ।
तद् यत्र स्वरादनन्तरान्तस्थान्तर्धातुर्भवति तद् द्विप्रकृतीनां स्थानमिति प्रदिशन्ति । तत्र सिद्धायामनुपपद्यमानायामितरयो-पपिपादयिषेत् । तत्राप्येकेऽल्पनिष्पत्तयो भवन्ति । तद्यथैतत् । ऊतिः । मृदुः । पृथुः । पृषतः । कुणारुमिति ।
अथापि भाषिकेभ्यो धातुभ्यो नैगमाः कृतो भाष्यन्ते । दमूनाः ।

क्षेत्रसाधा इति । अथापि नैगमेभ्यो भाषिकाः । उष्णम् ।
घृतमिति ।
अथापि प्रकृतय एवैकेषु भाष्यन्ते । विकृतय एकेषु ।
शवतिर्गतिकर्मा कंबोजेष्वेव भाष्यते । कंवोजाः कंबलभोजाः ।
कमनीयभोजा वा । कंबलः कमनीयो भवति । विकारमस्यार्येषु
भाषन्ते । शव इति । दातिर्लवनार्थे प्राच्येषु । दात्रमुदीच्येषु
। एवमेकपदानि निर्ब्रूयात् ।
अथ तद्धितसमासेष्वेकपर्वसु वानेकपर्वसु च पूर्वं पूर्वमपरमपरं
प्रविभज्य निर्ब्रूयात् । दण्ड्यः पुरुषः । दण्डमर्हतीति वा ।
दण्डेन संपद्यत इति वा । दण्डो ददातेर्धारयतिकर्मणः । अक्रूरो
ददते मणिमित्यभिभाषन्ते । दमनादित्यौपमन्यवः ।
दण्डमस्याकर्षतीति गर्हायाम् ।
कक्ष्यारज्जुरश्वस्य । कक्षं सेवते । कक्षो गाहतेः । क्स इति
नामकरणः । ख्यातेर्वानर्थकोऽभ्यासः । किमस्मिन् ख्यानमिति
। कषतेर्वा । तत्सामान्यान्मनुष्यकक्षः ।
बाहुमूलसामान्यादश्वस्य २

राज्ञः पुरुषो राजपुरुषः । राजा राजतेः । पुरुषः पुरि षादः ।
पुरि शयः । पूरयतेर्वा । पूरयत्यन्तरित्यन्तरपुरुषमभिप्रेत्य ।

यस्मा॒त्परं॒ नाप॑र॒मस्ति॒ किंचि॒द्यस्मा॒न्नाणी॑यो॒ न ज्यायो॑ऽस्ति॒ कश्चि॑त् ।
वृ॒क्ष इ॑व स्त॒ब्धो दि॒वि ति॑ष्ठ॒त्येक॒स्तेने॒दं पू॒र्णं पुरु॑षेण॒ सर्व॑म् ३

इत्यपि नगमो भवति ।
विश्वकद्राकर्षः । वीति चकद्र इति श्वगतौ भाष्यते । द्रातीति
गतिकुत्सना । कद्रातीति द्रातिकुत्सना । चकद्राति कद्रातीति
सतोऽनर्थकोऽभ्यासः । तदस्मिन्नस्तीति विश्वकद्रः ।
कल्याणवर्णरूपः । कल्याणवर्णस्येवास्य रूपम् । कल्याणं

कमनीयं भवति । वर्णो वृणोतेः । रूपं रोचतेः । एवं तद्धितसमासान्निर्ब्रूयात् ।
नैकपदानि निर्ब्रूयात् । नावैयाकरणाय । नानुपसन्नाय । अनिदंविदे वा । नित्यं ह्यविज्ञातुर्विज्ञानेऽसूया । उपसन्नाय तु निर्ब्रूयात् । यो वालं विज्ञातुं स्यात् । मेधाविने । तपस्विने वा ३

विद्या ह वै ब्राह्मणमाजगाम गोपाय मा शेवधिष्टेऽहमस्मि ।
असूयकायानृजवेऽयताय न मा ब्रूया वीर्यवती तथा स्याम् ॥
य आतृणत्त्यवितथेन कर्णावदुःखं कुर्वन्नमृतं सं प्रयच्छन् ।
तं मन्येत पितरं मातरं च तस्मै न द्रुह्येत् कतमच्चनाह ॥
अध्यापिता ये गुरुं नाद्रियन्ते विप्रा वाचा मनसा कर्मणा वा ।
यथैव ते न गुरोर्भोजनीयास्तथैव तान्न भुनक्ति श्रुतं तत् ॥
यमेव विद्याः शुचिमप्रमत्तं मेधाविनं ब्रह्मचर्योपपन्नम् ।
यस्ते न द्रुह्येत् कतमच्चनाह तस्मै मा ब्रूया निधिपाय ब्रह्मन् ॥

इति निधिः शेवधिरिति ४

अथातोऽनुक्रमिष्यामः । गौरिति पृथिव्या नामधेयम् । यद्दूरं गता भवति । यच्चास्यां भूतानि गच्छन्ति । गातेर्वौकारो नामकरणः ।
अथापि पशुनामेह भवत्येतस्मादेव । अथाप्यस्यां ताद्धितेन कृत्स्नवन्निगमा भवन्ति ।

गोभिः श्रीणीत मत्सरम् ।

इति पयसः । मत्सरः सोमः । मन्दतेस्तृप्तिकर्मणः । मत्सर इति लोभनाम । अभिमत्त एनेन धनं भवति । पयः पिबतेर्वा प्यायतेर्वा । क्षीरं क्षरतेः । घसेर्वेरो नामकरणः । उशीरमिति

यथा ।

अंशुं दुहन्तो अध्यासते गवि ।

इत्यधिषवणचर्मणः । अंशुः शमष्टमात्रो भवति । अननाय शं भवतीति वा ।
चर्म चरतेर्वा । उच्चृतं भवतीति वा ।
अथापि चर्म च श्लेष्मा च ।

गोभिः सन्नद्धो असि वीळयस्व ।

इति रथस्तुतौ । अथापि स्नाव च श्लेष्मा च ।
गोभिः सन्नद्धा पतति प्रसूता ।

इतीषुस्तुतौ ।
ज्यापि गौरुच्यते । गव्या चेत् ताद्धितम् । अथ चेन्न । गव्या गमयतीषूनिति ५

वृक्षेवृक्षे नियता मीमयद् गौस्ततो वयः प्र पतान्पूरुषादः ।

वृक्षेवृक्षे धनुषिधनुषि । वृत्वा क्षां तिष्ठतीति वा । क्षा क्षियतेः । निवासकर्मणः नियता मीमयद् गौः शब्दं करोति । मीमयतिः शब्दकर्मा । ततो वयः प्रपतन्ति । पुरुषानदनाय । विरिति शकुनिनाम । वेतेर्गतिकर्मणः । अथापीषुनामेह भवत्येतस्मादेव । आदित्योऽपि गौरुच्यते ।

उतादः परुषे गवि ।

पर्ववति भास्वतीत्यौपमन्यवः । अथाप्यस्यैको रश्मिश्चंद्रमसं प्रति दीप्यते तदेतेनोपेक्षितव्यम् । आदित्यतोऽस्य दीप्तिर्भवति ।
सुषुम्णः सूर्यरश्मिश्चन्द्रमा गन्धर्वः ।

इत्यपि निगमो भवति । सोऽपि गौरुच्यते ।
अत्राह॒ गोर॑मन्वत ।
इति । तदुपरिष्टाद् व्याख्यास्यामः । सर्वेऽपि रश्मयो गाव उच्यन्ते ६

ता व॒ां वास्तू॑न्युश्मसि॒ गम॑ध्यै॒ यत्र॒ गावो॒ भूरि॑शृंगा अ॒यास॑ः ।
अत्राह॒ तदु॑रुगा॒यस्य॒ वृष्ण॑ः पर॒मं प॒दमव॑ भाति॒ भूरि॑ ॥

तानि वां वास्तूनि कामयामहे गमनाय यत्र गावो भूरिशृंगा बहुशृंगाः । भूरीति बहुनो नामधेयम् । प्रभवतीति सतः । शृंगं श्रयतेर्वा । शृणातेर्वा । शम्नातेर्वा । शरणायोद्गतमिति वा । शिरसो निर्गतमिति वा । अयासोऽयनाः । तत्र तदुरुगायस्य विष्णोर्महागतेः परमं पदं परार्ध्यस्थमवभाति भूरि । पादः पद्यते । तन्निधानात् पदम् । पशुपादप्रकृतिः प्रभागपादः । प्रभागपादसामान्यादितराणि पदानि ।
एवमन्येषामपि सत्त्वानां संदेहा विद्यन्ते । तानि चेत् समानकर्माणि समाननिर्वचनानि । नानाकर्माणि चेन्नानानिर्वचनानि । यथार्थं निर्वक्तव्यानि ।
इतीमान्येकविंशतिः पृथिवीनामधेयान्यनुक्रान्तानि ।
तत्र निर्ऋृतिर्निरमणात् । ऋच्छतेः कृच्छ्रापत्तिरितरा । सा पृथिव्या संदिह्यते । तयोर्विभागः । तस्या एषा भवति ७

य ईं॑ च॒कार॒ न सो अ॒स्य वे॑द॒ य ईं॑ द॒दर्श॒ हिरु॒गिन्नु॒ तस्मा॑त् ।
स मा॒तुर्योना॒ परि॑वीतो अ॒न्तर्ब॑हुप्र॒जा निर्ऋ॑ति॒मा वि॑वेश ॥

बहुप्रजाः कृच्छ्रमापद्यत इति परिव्राजकाः । वर्षकर्मेति नैरुक्ताः । य ईं चकारेति करोतिकिरती संदिग्धौ वर्षकर्मणा । न सो अस्य वेद मध्यमः । स एवास्य वेद मध्यमो यो ददर्शादित्योपहितम् ।

स मातुर्योनौ । मातान्तरिक्षम् । निर्मीयन्तेऽस्मिन् भूतानि ।
योनिरन्तरिक्षम् । महानवयवः । परिवीतो वायुना ।
अयमपीतरो योनिरेतस्मादेव । परियुतो भवति । बहुप्रजा
भूमिमापद्यते वर्षकर्मणा ।
शाकपूणिः संकल्पयाञ्चक्रे सर्वा देवता जानानीति । तस्मै
देवतोभयलिङ्गा प्रादुर्बभूव । तां न जज्ञे । तां पप्रच्छ ।
विविदिषाणि त्वेति । सास्मा एतामृचमादिदेश । एषा
मद्देवतेति ८

अ॒यं स शिं॑क्ते॒ येन॒ गौर॒भीवृ॑ता॒ मिमा॑ति मा॒युं ध्व॒सना॒वधि॑ श्रि॒ता ।
सा चि॒त्तिभि॒र्नि हि च॒कार॒ मर्त्यं॑ वि॒द्युद्भव॑न्ती॒ प्रति॑ व॒व्रिमौ॑हत ॥

अयं स शब्दायते येन गौरभिप्रवृत्ता मिमाति । मायुं शब्दं करोति
। मायुमिवादित्यमिति वा । वागेषा माध्यमिका । ध्वंसने
मेघेऽधिश्रिता । सा चित्तिभिः कर्मभिर्नीचैः निकरोति मर्त्यम् ।
विद्युद्भवन्ती प्रत्यूहते वव्रिम् । वव्रिरिति रूपनाम । वृणोतीति
सतः । वर्षेण प्रच्छाद्य पृथिवीं तत्पुनरादत्ते ९

हिरण्यनामान्युत्तराणि पंचदश । हिरण्यं कस्मात् । ह्रियत
आयम्यमानमिति वा । ह्रियते जनाज्जनमिति वा । हितरमणं
भवतीति वा । हर्यतेर्वा स्यात् प्रेप्साकर्मणः ।
अन्तरिक्षनामान्युत्तराणि षोडश । अन्तरिक्षं कस्मात् । अन्तरा
क्षान्तं भवति ।
अन्तरेमे इति वा । शरीरेष्वन्तरक्षयमिति वा ।
तत्र समुद्र इत्येतत् पार्थिवेन समुद्रेण संदिह्यते । समुद्रः कस्मात्
। समुद्द्रवन्त्यस्मादापः । समभिद्रवन्त्येनमापः ।
संमोदन्तेऽस्मिन्भूतानि । समुदको भवति । समुनत्तीति वा ।
तयोर्विभागः ।

तत्रेतिहासमाचक्षते । देवापिश्चार्ष्टिषेणः शंतनुश्च कौरव्यौ भ्रातरौ बभूवतुः । स शंतनुः कनीयानभिषेचयांचक्रे । देवापिस्तपः प्रतिपेदे । ततः शंतनो राज्ये द्वादश वर्षाणि देवो न ववर्ष । तमूचुर्ब्राह्मणाः । अधर्मस्त्वया चरितः । ज्येष्ठं भ्रातरमन्तरित्याभिषेचितम् । तस्मात्ते देवो न वर्षतीति । स शंतनुर्देवापिं शिशिक्ष राज्येन । तमुवाच देवापिः । पुरोहितस्तेऽसानि । याजयानि च त्वेति । तस्यैतद् वर्षकामसूक्तम् । तस्यैषा भवति १०

आर्ष्टिषेणो होत्रमृषिर्नि षीदन्देवापिर्देवसुमतिं चिकित्वान् ।
स उत्तरस्मादधरं समुद्रमपो दिव्या असृजद्वर्ष्या अभि ॥

आर्ष्टिषेण ऋष्टिषेणस्य पुत्रः । इषितसेनस्येति वा । सेना सेश्वरा । समानगतिर्वा । पुत्रः पुरु त्रायते । निपरणाद्वा । पुन्नरकं ततस्त्रायत इति वा । होत्रमृषिर्निषीदन् । ऋषिर्दर्शनात् । स्तोमान्ददर्शेत्यौपमन्यवः ।
तद्यदेनांस्तपस्यमानान् ब्रह्म स्वयंभ्वभ्यानर्षत् तदृषीणामृषित्वम् । इति विज्ञायते । देवापिर्देवानामाप्त्या स्तुत्या च प्रदानेन च देव-सुमतिं देवानां कल्याणीं मतिं चिकित्वांश्चेतनावान् । स उत्तरस्मादधरं समुद्रम् । उत्तर उद्धततरो भवति । अधरोऽधोरः । अधो न धावतीत्यूर्ध्वगतिः प्रतिषिद्धा । तस्योत्तरा भूयसे निर्वचनाय ११

यद्देवापिः शन्तनवे पुरोहितो होत्राय वृतः कृपयन्नदीधेत् ।
देवश्रुतं वृष्टिवनिं रराणो बृहस्पतिर्वाचमस्मा अयच्छत् ॥

शन्तनुः शं तनोऽस्त्विति वा । शमस्मै तन्वा अस्त्विति वा । पुरोहितः पुर एनं दधति । होत्राय वृतः कृपायमाणोऽन्वध्यायत् ।

देवश्रुतं देवा एनं शृरावन्ति वृष्टियाचिनम् । रराणो रातिरभ्यस्तः । बृहस्पतिर्ब्रह्मासीत् । सोऽस्मै वाचमयच्छत् । बृहदुपव्याख्यातम् १२

साधारणान्युत्तराणि षड् दिवश्चादित्यस्य च । यानि त्वस्य प्राधान्येनोपरिष्टात्तानि व्याख्यास्यामः । आदित्यः कस्मात् । आदत्ते रसान् । आदत्ते भासं ज्योतिषाम् । आदीप्तो भासेति वा । अदितेः पुत्र इति वा । अल्पप्रयोगं त्वस्यैतदार्चाभ्याम्नाये सूक्तभाक् ।

सूर्यमादितेयम् ।

अदितेः पुत्रम् । एवमन्यासामपि देवतानामादित्यप्रवादाःस्तुतयो भवन्ति । तद्यथैतन्मित्रस्य वरुणस्यार्यम्णो दक्षस्य भगस्यांशस्येति । अथापि मित्रावरुणयोः ।

आदित्या दानुनस्पती ।

दानपती । अथापि मित्रस्यैकस्य ।

प्र स मित्र मर्तो अस्तु प्रयस्वान्यस्त आदित्य शिक्षति व्रतेन ।

इत्यपि निगमो भवति । अथापि वरुणस्यैकस्य

अथा वयमादित्य व्रते तव ।

व्रतमिति कर्मनाम । निवृत्तिकर्म वारयतीति सतः । इदमपीतरद्व्रतमेतस्मादेव वृणोतीति सतः । अन्नमपि व्रतमुच्यते । यदावृणोति शरीरम् १३

स्वरादित्यो भवति । सु अरणः । सु ईरणः । स्वृतो रसान् । स्वृतो भासं ज्योतिषाम् । स्वृतो भासेति वा । एतेन

द्यौर्व्याख्याता । पृश्निरादित्यो भवति । प्राश्नुत एनं वर्ण इति नैरुक्ताः । संस्पृष्टो रसान् । संस्प्रष्टा भासं ज्योतिषाम् । संस्प्रष्टो भासेति वा । अथ द्यौः । संस्पृष्टा ज्योतिर्भिः पुण्यकृद्भिश्च ।
नाक आदित्यो भवति नेता भासाम् । ज्योतिषां प्रणयः । अथ द्यौः । कमिति सुखनाम । प्रतिषिद्धं प्रतिषिध्येत ।

न॒ वा अ॒मुं लो॒कं ज॒ग्मुषे॒ किं च॒ नाक॑म् ।

न वा अमुं लोकं जग्मुषे किं च नासुखम् । पुण्यकृतो ह्येव तत्र गच्छन्ति ।
गौरादित्यो भवति । गमयति रसान् । गच्छत्यन्तरिक्षे । अथ द्यौः । यत्पृथिव्या अधिदूरं गता भवति । यच्चास्यां ज्योतींषि गच्छन्ति । विष्टबादित्यो भवति । आविष्टो रसान् । आविष्टो भासं ज्योतिषां । आविष्टो भासेति वा । अथ द्यौः । आविष्टा ज्योतिर्भिः पुण्यकृद्भिश्च ।
नभ आदित्यो भवति । नेता भासाम् । ज्योतिषां प्रणयः । अपि वा भन एव स्याद्विपरीतः ।
न न भातीति वा । एतेन द्यौर्व्याख्याता १४

रश्मिनामान्युत्तराणि पंचदश । रश्मिर्यमनात् । तेषामादितः साधारणानि पञ्चाश्वरश्मिभिः ।
दिङ्नामान्युत्तरान्यष्टौ । दिशः कस्मात् । दिशतेः । आसदनात् । अपि वाभ्यशनात् ।
तत्र काष्ठा इत्येतदनेकस्यापि सत्त्वस्य भवति । काष्ठा दिशो भवन्ति । क्रान्त्वा स्थिता भवन्ति । काष्ठा उपदिशो भवन्ति । इतरेतरं क्रान्त्वा स्थिता भवन्ति । आदित्योऽपि काष्ठोच्यते । क्रान्त्वा स्थितो भवति । आज्यन्तोऽपि काष्ठोच्यते । क्रान्त्वा

स्थितो भवति । आपोऽपि काष्ठा उच्यन्ते । क्रान्त्वा स्थिता भवन्तीति स्थावराणाम् १५

अतिष्ठन्तीनामनिवेशनानां काष्ठानां मध्ये निहितं शरीरम् ।
वृत्रस्य निण्यं वि चरन्त्यापो दीर्घं तम आशयदिन्द्रशत्रुः ।

अतिष्ठन्तीनामनिविशमानानामित्यस्थावराणां काष्ठानां मध्ये निहितं शरीरं मेघः । शरीरं शृणातेः । शम्नातेर्वा । वृत्रस्य निर्णामं विचरन्ति विजानन्त्याप इति । दीर्घं द्राघतेः । तमस्तनोतेः । आशयदाशेतेः । इन्द्रशत्रुरिन्द्रोऽस्य शमयिता वा शातयिता वा । तस्मादिन्द्रशत्रुः । तत्को वृत्रः । मेघ इति नैरुक्ताः । त्वाष्ट्रोऽसुर इत्यैतिहासिकाः । अपां च ज्योतिषश्च मिश्रीभावकर्मणो वर्षकर्म जायते । तत्रोपमार्थेन युद्धवर्णा भवन्ति । अहिवत्तु खलु मन्त्रवर्णा ब्राह्मणवादाश्च । विवृद्ध्या शरीरस्य स्रोतांसि निवारयाञ्चकार । तस्मिन् हते प्रसस्यन्दिर आपः । तदभिवादिन्येषर्ग्भवति १६

दासपत्नीरहिगोपा अतिष्ठन्निरुद्धा आपः पणिनेव गावः ।
अपां बिलमपिहितं यदासीद्वृत्रं जघन्वाँ अप तद्ववार ॥

दासपत्नीर्दासाधिपत्न्यः । दासो दस्यतेः । उपदासयति कर्माणि । अहिगोपा अतिष्ठन् । अहिना गुप्ताः । अहिरयनात् । एत्यन्तरिक्षे ।
अयमपीतरोऽहिरेतस्मादेव । निर्ह्रसितोपसर्गः । आहन्तीति । निरुद्धा आपः पणिनेव गावः । पणिर्वणिग्भवति । पणिः पणनात् । वणिक् पण्यं नेनेक्ति । अपां बिलमपिहितं यदासीत् । बिलं भरं भवति बिभर्तेः । वृत्रं जघ्निवान् । अपववार तत् । वृत्रो वृणोतेर्वा । वर्ततेर्वा । वर्धतेर्वा ।

यदवृणोत्तदु वृत्रस्य वृत्रत्वम् । इति विज्ञायते । यदवर्तत तदु वृत्रस्य वृत्रत्वम् । इति विज्ञायते । यदवर्धत तदु वृत्रस्य वृत्रत्वम् । इति विज्ञायते १७

रात्रिनामान्युत्तराणि त्रयोविंशतिः । रात्रिः कस्मात् । प्ररमयति भूतानि नक्तञ्चारीणि । उपरमयतीतराणि ध्रुवीकरोति । रातेर्वा स्याद्दानकर्मणः । प्रदीयन्तेऽस्यामवश्यायाः ।
उषोनामान्युत्तराणि षोडश । उषाः कस्मात् । उच्छतीति सत्याः । रात्रेरपरः कालः । तस्या एषा भवति १८

इदं श्रेष्ठं ज्योतिषां ज्योतिरागाच्चित्रः प्रकेतो अजनिष्ट विभ्वा ।
यथा प्रसूता सवितुः सवायँ एवा रात्र्युषसे योनिमारैक् ॥

इदं श्रेष्ठं ज्योतिषां ज्योतिरागमत् । चित्रं प्रकेतनं प्रज्ञाततममजनिष्ट विभूततमम् । यथा प्रसूता सवितुः प्रसवाय रात्रिरादित्यस्यैवं रात्र्युषसे योनिमरिचत् स्थानम् । स्त्रीयोनिरभियुत एनां गर्भः । तस्या एषापरा भवति १९

रुशद्वत्सा रुशती श्वेत्यागादारैगु कृष्णा सदनान्यस्याः ।
समानबन्धू अमृते अनूची द्यावा वर्णं चरत आमिनाने ॥

रुशद्वत्सा सूर्यवत्सा । रुशदिति वर्णनाम । रोचतेर्ज्वलतिकर्मणः । सूर्यमस्या वत्समाह । साहचर्यात् । रसहरणाद्वा । रुशती श्वेत्यागात् । श्वेत्या श्वेततेः । अरिचत् कृष्णा सदनान्यस्याः कृष्णवर्णा रात्रिः । कृष्णं कृष्यतेः । निकृष्टो वर्णः । अथैने संस्तौति । समानबन्धू समानबन्धने । अमृते अमरणधर्माणौ । अनूची । इतीतरेतरमभिप्रेत्य । द्यावा वर्णं चरतः । ते एव द्यावौ । द्योतनात् । अपि वा द्यावा चरतस्तया चरत इति स्यात् । अमिनाने । अन्योन्यस्याध्यात्मं कुर्वाणे ।

अहर्नामान्युत्तराणि द्वादश । अहः कस्मात् । उपाहरन्त्यस्मिन् कर्माणि । तस्यैष निपातो भवति वैश्वानरीयायामृचि २०

अहश्च कृष्णमहरर्जुनं च वि वर्तेते रजसी वेद्याभिः ।
वैश्वानरो जायमानो न राजावातिरज्ज्योतिषाग्निस्तमांसि ॥

अहश्च कृष्णं रात्रिः शुक्लं चाहरर्जुनम् । विवर्तेते रजसी वेद्याभिर्वेदितव्याभिः प्रवृत्तिभिः । वैश्वानरो जायमान इव । उद्यन्नादित्यः । सर्वेषां ज्योतिषां राजा । अवाहन्नग्निर्ज्योतिषा तमांसि ।
मेघनामान्युत्तराणि त्रिंशत् । मेघः कस्मात् । मेहतीति सतः । आ उपर उपल इत्येताभ्यां साधारणानि पर्वतनामभिः । उपर उपलो मेघो भवति । उपरमन्तेऽस्मिन्नभ्राणि । उपरता आप इति वा । तेषामेषा भवति २१

देवानां माने प्रथमा अतिष्ठन्कृन्तत्रादेषामुपरा उदायन् ।
त्रयस्तपन्ति पृथिवीमनूपा द्वा बृबूकं वहतः पुरीषम् ॥

देवानां निर्माणे प्रथमा अतिष्ठन्माध्यमिका देवगणाः । प्रथम इति मुख्यनाम । प्रतमो भवति । कृन्तत्रमन्तरिक्षम् । विकर्तनं मेघानाम् । विकर्तनेन मेघानामुदकं जायते । त्रयस्तपन्ति पृथिवीमनूपाः । पर्जन्यो वायुरादित्यः शीतोष्णवर्षैरोषधीः पाचयन्ति । अनूपा अनुवपन्ति लोकान्त्स्वेन स्वेन कर्मणा । अयमपीतरोऽनूप एतस्मादेव । अनूप्यत उदकेन । अपि वान्वाबिति स्यात् । यथा प्रागिति । तस्यानूप इति स्यात् । यथा प्राचीनमिति । द्वा बृबूकं वहतः पुरीषं । वाय्वादित्या उदकम् । बृबूकमित्युदकनाम । ब्रवीतेः शब्दकर्मणः । भ्रंशतेर्वा । पुरीषं पृणातेः । पूरयतेर्वा २२

वाङ्नामान्युत्तराणि सप्तपञ्चाशत् । वाक् कस्मात् । वचेः ।
तत्र सरस्वतीत्येतस्य नदीवद्देवतावच्च निगमा भवन्ति ।
तद्यद्देवतावदुपरिष्टात्तद्व्याख्यास्यामः । अथैतन्नदीवत् २३

इयं शुष्मेभिर्बिसखा इवारुजत्सानु गिरीणां तविषेभिरूर्मिभिः ।
पारावतघ्नीमवसे सुवृक्तिभिः सरस्वतीमा विवासेम धीतिभिः ।

इयं शुष्मैः शोषणैः । शुष्ममिति बलनाम । शोषयतीति सतः ।
बिसं बिस्यतेर्भेदनकर्मणः । वृद्धिकर्मणो वा । सानु समुच्छ्रितं
भवति । समुन्नुन्नमिति वा । महद्भिरूर्मिभिः । पारावतघ्नीं
पारावारघातिनीम् । पारं परं भवति । अवारमवरम् । अवनाय
सुप्रवृत्ताभिः शोभनाभिः स्तुतिभिः सरस्वतीं नदीं कर्मभिः परिचरेम ।
उदकनामान्युत्तराण्येकशतम् । उदकं कस्मात् । उनत्तीति
सतः।
नदीनामान्युत्तराणि सप्तत्रिंशत् । नद्यः कस्मात् । नदना भवन्ति
। शब्दवत्यः । बहुलमासां नैघण्टुकं वृत्तम् । आश्चर्यमिव
प्राधान्येन ।
तत्रेतिहासमाचक्षते । विश्वामित्र ऋषिः सुदासः पैजवनस्य पुरो-
हितो बभूव ।
विश्वामित्रः सर्वमित्रः । सर्वं संसृतम् । सुदाः कल्याणदानः ।
पैजवनः पिजवनस्य पुत्रः । पिजवनः पुनः स्पर्धनीयजवो वा ।
अमिश्रीभावगतिर्वा । स वित्तं गृहीत्वा विपाट्छुतुद्र्योः
सम्भेदमाययौ । अनुययुरितरे । स विश्वामित्रो नदीस्तुष्टाव ।
गाधा भवतेति । अपि द्विवत् । अपि बहुवत् । तद् यद्
द्विवदुपरिष्टात्तद्व्याख्यास्यामः । अथैतद्बहुवत् २४

रमध्वं मे वचसे सोम्याय ऋतावरीरुप मुहूर्तमेवैः ।
प्र सिन्धुमच्छा बृहती मनीषावस्युरह्वे कुशिकस्य सूनुः ।

उपरमध्वं मे वचसे सोम्याय सोमसम्पादिने । ऋतावरीर्ऋतवत्यः । ऋतमित्युदकनाम । प्रत्यृतं भवति । मुहूर्तमेवैरयनैरवनैर्वा । मुहूर्तो मुहुर्ऋतुः । ऋतुरर्त्तेर्गतिकर्मणः । मुहुर्मूह्ळ इव कालः । यावदभीक्ष्णं चेति । अभीक्ष्णमभिक्षणं भवति । क्षणः क्षणोतेः । प्रक्ष्णुतः कालः । कालः कालयतेर्गतिकर्मणः । प्राभिह्वयामि सिन्धुं बृहत्या महत्या मनीषया मनस ईषया स्तुत्या प्रज्ञया वावनाय । कुशिकस्य सूनुः । कुशिको राजा बभूव । क्रोशतेः शब्दकर्मणः । क्रंशतेर्वा स्यात्प्रकाशयति कर्मणः । साधु विक्रोशयिताऽर्थानामिति वा । नद्यः प्रत्यूचुः २५

इन्द्रो अस्माँ अरदद्वज्रबाहुरपाहन्वृत्रं परिधिं नदीनाम् ।
देवोऽनयत्सविता सुपाणिस्तस्य वयं प्रसवे याम उर्वीः ॥

इन्द्रोऽस्मानरदद्वज्रबाहुः । रदतिः खनतिकर्मा । अपाहन् वृत्रं परिधिं नदीनामिति व्याख्यातम् । देवोऽनयत्सविता । सुपाणिः कल्याणपाणिः । पाणिः पणायतेः पूजाकर्मणः । प्रगृह्य पाणी देवान् पूजयन्ति । तस्य वयं प्रसवे याम उर्वीः । उर्व्य ऊर्णोतेः । वृणोतेरित्यौर्णवाभः । प्रत्याख्यायान्तत आशुश्रुवुः २६

आ ते कारो शृणवामा वचांसि ययाथ दूरादनसा रथेन ।
नि ते नंसै पीप्यानेव योषा मर्यायेव कन्या शश्वचै ते ॥

आशृणवाम ते कारो वचनानि । याहि दूरादनसा च रथेन च निनमाम ते पाययमानेव योषा पुत्रम् । मर्यायेव कन्या परिष्वजनाय । निनमा इति वा ।
अश्वनामान्युत्तराणि षड्विंशतिः । तेषामष्टा उत्तराणि बहुवत् । अश्वः कस्मात् । अश्नुतेऽध्वानम् । महाशनो भवतीति वा । तत्र दधिक्रा इत्येतद् दधत् क्रामतीति वा । दधत् क्रन्दतीति वा ।

दधदाकारी भवतीति वा । तस्याश्ववद्देवतावच्च निगमा भवन्ति ।
तद्यद् देवतावदुपरिष्टात्तद्व्याख्यास्यामः । अथैतदश्ववत् २७

उत स्य वाजी क्षिपणिं तुरण्यति ग्रीवायां बद्धो अपि कक्ष आसनि ।
क्रतुं दधिक्रा अनु संतवीत्वत्पथामङ्कांस्यन्वापनीफणत् ॥

अपि स वाजी वेजनवान् । क्षेपणमनु तूर्णमश्नुतेऽध्वानम् ।
ग्रीवायां बद्धः । ग्रीवा गिरतेर्वा । गृणातेर्वा । गृह्णातेर्वा ।
अपि कक्ष आसनीति व्याख्यातम् । क्रतुं दधिक्राः कर्म वा प्रज्ञां
वा । अनुसंतवीत्वत् । तनोतेः पूर्वया प्रकृत्या निगमः ।
पथामङ्कांसि पथां कुटिलानि । पन्थाः पततेर्वा । पद्यतेर्वा ।
पन्थतेर्वा । अङ्कोऽञ्चतेः । आपनीफणदिति फणतेश्चर्करीतवृत्तम् ॥
दशोत्तराण्यादिष्टोपयोजनानीत्याचक्षते साहचर्यज्ञानाय ।
ज्वलतिकर्माण उत्तरे धातव एकादश ।
तावन्त्येवोत्तराणि ज्वलतो नामधेयानि नामधेयानि २८

अथ निर्वचनमोघो राज्ञो विद्या ह व अथातोऽनुक्रमिष्यामो वृक्षेवृक्षे
तावां वास्तूनि य ईं चकारायं स शिङ्क्ते हिरण्यनामान्यार्ष्टिषेणो
यद्देवापिः साधारणानि स्वरादित्यो रश्मिनामान्यतिष्ठन्तीनां दासपत्नी
रात्रिनामानीदं श्रेष्ठं रुशद्वत्साहश्च कृष्णं देवानां माने वाङ्नामानीयं
शुष्मेभि रमध्वं म इन्द्रो अस्मानाते कारावुतस्य वाज्यष्टाविंशतिः ॥

इति निरुक्ते पूर्वषट्के द्वितीयोऽध्यायः समाप्तः

## अथ तृतीयोऽध्यायः

कर्मनामान्युत्तराणि षड्विंशतिः । कर्म कस्मात् । क्रियत इति सतः ।

अपत्यनामान्युत्तराणि पञ्चदश । अपत्यं कस्मात् । अपततं भवति । नानेन पततीति वा । तद्यथा जनयितुः प्रजा । एवमर्थीये ऋचा उदाहरिष्यामः १

परिषद्यं ह्यरणस्य रेक्णो नित्यस्य रायः पतयः स्याम ।
न शेषो अग्ने अन्यजातमस्त्यचेतानस्य मा पथो वि दुक्षः ॥

परिहर्तव्यं हि नोपसर्तव्यम् । अरणस्य रेक्णः । अरणोऽपार्णो भवति । रेक्ण इति धननाम । रिच्यते प्रयतः । नित्यस्य रायः पतयः स्याम । पित्र्यस्येव धनस्य । न शेषोऽग्ने अन्यजातमस्ति । शेष इत्यपत्यनाम । शिष्यते प्रयतः । अचेतयमानस्य तत्प्रमत्तस्य भवति । मा नः पथो विदूदुष इति ।
तस्योत्तरा भूयसे निर्वचनाय २

न हि ग्रभायारणः सुशेवोऽन्योदर्यो मनसा मन्तवा उ ।
अधा चिदोकः पुनरित्स एत्या नो वाज्यभीषाळेतु नव्यः ॥

न हि ग्रहीतव्यो अरणः सुसुखतमोऽपि । अन्योदर्यो मनसापि न मन्तव्यः । ममायं पुत्रः इति । अथ स ओकः पुनरेव तदेति यत आगतो भवति । ओक इति निवासनामोच्यते । एतु नो वाजी वेजनवान् । अभिषहमाणः सपत्नान् । नवजातः स एव पुत्र इति । अथैतां दुहितृदायाद्य उदाहरन्ति । पुत्रदायाद्य इत्येके ३

शासद्वह्निर्दुहितुर्नप्त्यंगाद्विद्वाँ ऋतस्य दीधितिं सपर्यन् ।
पिता यत्र दुहितुः सेकमृञ्जन्त्सं शग्म्येन मनसा दधन्वे ॥

प्रशास्ति वोळ्हा सन्तानकर्मणे दुहितुः पुत्रभावम् । दुहिता दुर्हिता । दूरे हिता । दोग्धेर्वा । नप्तारमुपागमत् । दौहित्रं पौत्रमिति । विद्वान् प्रजननयज्ञस्य । रेतसो वा । अङ्गादङ्गात्संभूतस्य हृदयादधिजातस्य मातरि प्रत्यृतस्य । विधानं पूजयन् । अविशेषेण मिथुनाः पुत्रा दायादा इति ।
तदेतदृक्छ्लोकाभ्यामभ्युक्तम् ।

अङ्गादङ्गात्संभवसि हृदयादधिजायसे ।
आत्मा वै पुत्रनामासि स जीव शरदः शतम् ॥ इति ।
अविशेषेण पुत्राणां दायो भवति धर्मतः ।
मिथुनानां विसर्गादौ मनुः स्वायंभुवोऽब्रवीत् ॥

न दुहितर इत्येके । तस्मात्पुमान् दायादोऽदायादा स्त्री ।
इति विज्ञायते ।
तस्मात्स्त्रियं जातां परास्यन्ति न पुमांसम् ।
इति च ।
स्त्रीणां दानविक्रयातिसर्गा विद्यन्ते न पुंसः । पुंसोऽपीत्येके ।
शौनःशेपे दर्शनात् । अभ्रातृमतीवाद इत्यपरम् ।

अमूर्या यन्ति जामयः सर्वा लोहितवाससः
अभ्रातर इव योषास्तिष्ठन्ति हतवर्त्मनः ॥

अभ्रातृका इव योषास्तिष्ठन्ति सन्तानकर्मणे पिण्डदानाय हतवर्त्मानः । इत्यभ्रातृकाया अनिर्वाह औपमिकः । तस्योत्तरा भूयसे निर्वचनाय ४

अभ्रातेव पुंस एति प्रतीची गर्तारुगिव सनये धनानाम् ।
जायेव पत्य उशती सुवासा उषा हस्रेव नि रिणीते अप्सः ॥

अभ्रातृकेव पुंसः पितृनेत्यभिमुखी सन्तानकर्मणे पिण्डदानाय न पतिम् । गर्तारोहिणीव धनलाभाय दाक्षिणाजी । गतेः सभास्थाणुः । गृणातेः । सत्यसङ्गरो भवति । तं तत्र यापुत्रा यापतिका सारोहति । तां तत्राक्षेणाघ्नन्ति । सा रिक्थं लभते । श्मशानसंचयोऽपि गर्त उच्यते । गुरतेः । अपगूर्णो भवति । श्मशानं श्मशयनम् । श्म शरीरम् । शरीरं शृणातेः । शम्नातेर्वा । श्मश्रु लोम । श्मनि श्रितं भवति । लोम लुनातेर्वा । लीयतेर्वा ।

नोपरस्याविष्कुर्याद् यदुपरस्याविष्कुर्याद् गर्तेष्ठाः स्यात्प्रमायुको यजमानः ।

इत्यपि निगमो भवति ।

रथोऽपि गर्त उच्यते । गृणातेः स्तुतिकर्मणः । स्तुततमं यानम् ।

आ रोहथो वरुण मित्र गर्तम् ।

इत्यपि निगमो भवति ।

जायेव पत्ये कामयमाना सुवासा ऋतुकालेषूषा हसनेव दन्तान्विवृणुते रूपाणीति । चतस्र उपमाः ।

नाभ्रात्रीमुपयच्छेत तोकं ह्यस्य तद् भवति ।

इत्यभ्रातृकाया उपयमनप्रतिषेधः प्रत्यक्षः । पितुश्च पुत्रभावः । पिता यत्र दुहितुरप्रत्ताया रेतःसेकं प्रार्जयति । संदधात्यात्मानं संगमेन मनसेति ।

अथैतां जाम्या रिक्थप्रतिषेध उदाहरन्ति । ज्येष्ठं पुत्रिकाया इत्येके ५

न जा॒मये॒ तान्वो॑ रि॒क्थमा॑रैक् च॒कार॒ गर्भं॑ स॒नितु॑र्नि॒धान॑म् ।
यदी॑ मा॒तरो॑ ज॒नय॑न्त॒ वह्नि॑म॒न्यः क॒र्ता सु॒कृतो॑र॒न्य ऋ॒न्धन् ॥

न जामये भगिन्यै । जामिरन्येऽस्यां जनयन्ति जामपत्यम् । जमतेर्वा स्याद्गतिकर्मणः । निर्गमनप्राया भवति । तान्व

आत्मजः पुत्रः । रिक्थं प्रारिचत् प्रादात् । चकारैनां गर्भनिधानीम् । सनितुर्हस्तग्राहस्य । यदी मातरो जनयन्त । वह्निं पुत्रम् । अवह्निं च स्त्रियम् । अन्यतरः सन्तानकर्ता भवति पुमान्दायादः । अन्यतरोऽर्द्धयित्वा जामिः प्रदीयते परस्मै ६

मनुष्यनामान्युत्तराणि पञ्चविंशतिः ।
मनुष्याः कस्मात् । मत्वा कर्माणि सीव्यन्ति । मनस्यमानेन सृष्टाः । मनस्यतिः पुनर्मनस्वीभावे । मनोरपत्यम् । मनुषो वा । तत्र पञ्चजना इत्येतस्य निगमा भवन्ति ७

तदद्य वाचः प्रथमं मंसीय येनासुराँ अभि देवा असाम ।
ऊर्जाद उत यज्ञियासः पञ्चजना मम होत्रं जुषध्वम् ॥

तदद्यवाचः परमं मंसीय येनासुरानभिभवेम देवाः । असुरा असुरताः । स्थानेष्वस्ताः । स्थानेभ्य इति वा । अपि वासुरिति प्राणनाम । अस्तः शरीरे भवति । तेन तद्वन्तः । सोर्देवानसृजत तत् सुराणां सुरत्वम् । असोरसुरानसृजत तदसुराणामसुरत्वम् ।
इति विज्ञायते ।
ऊर्जाद उत यज्ञियासः । अन्नादाश्च यज्ञियाश्च । ऊर्गित्यन्ननाम । ऊर्जयतीति सतः । पक्वं सुप्रवृक्णमिति वा । पञ्चजना मम होत्रं जुषध्वम् । गन्धर्वाः पितरो देवा असुरा रक्षांसीत्येके । चत्वारो वर्णा निषादः पञ्चम इत्यौपमन्यवः । निषादः कस्मात् । निषदनो भवति । निषण्णमस्मिन्पापकमिति नैरुक्ताः ।

यत्पाञ्चजन्यया विशा ।

पञ्चजनीनया विशा । पञ्च पृक्ता संख्या । स्त्रीपुंनपुंसकेष्वविशिष्टा ।

बाहुनामान्युत्तराणि द्वादश । बाहुः कस्मात् । प्रबाधत आभ्यां कर्माणि ।
अङ्गुलिनामान्युत्तराणि द्वाविंशतिः । अङ्गुल्यः कस्मात् ।
अग्रगामिन्यो भवन्तीति वा । अग्रगालिन्यो भवन्तीति वा ।
अग्रकारिण्यो भवन्तीति वा । अग्रसारिण्यो भवन्तीति वा ।
अङ्कना भवन्तीति वा । अञ्चना भवन्तीति वा । अपि
वाभ्यञ्जनादेव स्युः । तासामेषा भवति ८

दशावनिभ्यो दशकक्ष्येभ्यो दशयोक्त्रेभ्यो दशयोजनेभ्यः ।
दशाभीशुभ्यो अर्चताजरेभ्यो दश धुरो दश युक्ता वहद्भ्यः ॥

अवनयोऽङ्गुल्यो भवन्ति । अवन्ति कर्माणि । कक्ष्याः
प्रकाशयन्ति कर्माणि । योक्त्राणि योजनानीति व्याख्यातम् ।
अभीशवोऽभ्यश्नुवते कर्माणि । दशधुरो दश युक्ता वहद्भ्यः ।
धूर्धूर्वतेर्वधकर्मणः । इयमपीतरा धूरेतस्मादेव ।
विहन्ति वहम् । धारयतेर्वा ।
कान्तिकर्माण उत्तरे धातवोऽष्टादश ।
अन्ननामान्युत्तराण्यष्टाविंशतिः । अन्नं कस्मात् । आनतं भूतेभ्यः
। अत्तेर्वा । अत्तिकर्माण उत्तरे धातवो दश ।
बलनामान्युत्तराण्यष्टाविंशतिः । बलं कस्मात् । बलं भरं भवति
। बिभर्तेः ।
धननामान्युत्तराण्यष्टाविंशतिरेव । धनं कस्मात् । धिनोतीति
सतः ।
गोनामान्युत्तराणि नव ।
क्रुध्यतिकर्माण उत्तरे धातवो दश ।
क्रोधनामान्युत्तराण्येकादश ।
गतिकर्माण उत्तरे धातवो द्वाविंशशतम् ।

क्षिप्रनामान्युत्तराणि षड्विंशतिः । क्षिप्रं कस्मात् । संक्षिप्तो विकर्षः ।
अन्तिकनामान्युत्तराण्येकादश । अन्तिकं कस्मात् । आनीतं भवति ।
संग्रामनामान्युत्तराणि षट्चत्वारिंशत् । संग्रामः कस्मात् । संगमनाद्वा । संगरणाद्वा । संगतौ ग्रामाविति वा ।
तत्र खल इत्येतस्य निगमा भवन्ति ९

अभी३ दमेकमेको अस्मि निष्षाळभी द्वा किमु त्रयः करन्ति ।
खले न पर्षान्प्रति हन्मि भूरि किं मा निन्दन्ति शत्रवोऽनिन्द्राः ॥

अभिभवामीदमेकमेकः । अस्मि निष्षहमाणः ।
सपत्नानभिभवामि । द्वौ किं मा त्रयः कुर्वन्ति । एक इता संख्या । द्वौ द्रुततरा संख्या । त्रयस्तीर्णतमा संख्या ।
चत्वारश्चलिततमा संख्या । अष्टावश्नोतेः । नव न वननीया ।
नावाप्ता वा । दश दस्ता । दृष्टार्था वा । विंशतिर्द्विदशतः ।
शतं दशदशतः । सहस्रं सहस्वत् । अयुतं प्रयुतं नियुतं तत्तदभ्यस्तम् ।
अर्बुदो मेघो भवति । अरणमम्बु । तद्दः । अम्बुदो अम्बुमद्भातीति वा । अम्बुमद्भवतीति वा । स यथा महान्बहुर्भवति वर्षंस्तदिवार्बुदम् । खले न पर्षान्प्रति हन्मि भूरि । खल इव पर्षान् प्रतिहन्मि भूरि । खल इति संग्रामनाम ।
खलतेर्वा । स्खलतेर्वा । अयमपीतरः खल एतस्मादेव ।
समास्कन्नो भवति । किं मा निन्दन्ति शत्रवोऽनिन्द्राः । य इन्द्रं न विदुः । इन्द्रो ह्यहमस्मि । अनिन्द्रा इतर इति वा ।
व्याप्तिकर्माण उत्तरे धातवो दश । तत्र द्वे नामनी आक्षाण आश्नुवानः । आपान आप्नुवानः ।

वधकर्माणि उत्तरे धातवस्त्रयस्त्रिंशत् । तत्र वियात इत्येतद्
वियातयत इति वा । वियातयेति वा ।

आखण्डल प्र हूयसे ।

आखण्डयितः । खण्डं खण्डयतेः ।
तळिदित्यन्तिकवधयोः संसृष्टकर्म । ताळयतीति सतः १०

त्वया वयं सुवृधा ब्रह्मणस्पते स्पार्हा वसु मनुष्या ददीमहि ।
या नो दूरे तळितो या अरातयोऽभि सन्ति जम्भया ता अनप्नसः ॥

त्वया वयं सुवर्धयित्रा ब्रह्मणस्पते स्पृहणीयानि वसूनि मनुष्येभ्य
आददीमहि । याश्च नो दूरे तळितो याश्चान्तिके ।
अरातयोऽदानकर्माणो वा । अदानप्रज्ञा वा । जम्भय ता अनप्नसः
। अप्न इति रूपनाम । आप्नोतीति सतः ।
विद्युत्तळिद्भवतीति शाकपूणिः । सा ह्यवताळयति । दूराच्च
दृश्यते । अपि त्विदमन्तिकनामैवाभिप्रेतं स्यात् ।

दूरे चित्सन्तळिदिवाति रोचसे ।

दूरेऽपि सन्नन्तिक इव संदृश्यस इति ।
वज्रनामान्युत्तराण्यष्टादश । वज्रः कस्मात् । वर्जयतीति सतः
। तत्र कुत्स इत्येतत् कृन्ततेः । ऋषिः कुत्सो भवति । कर्ता
स्तोमानामित्यौपमन्यवः । अथाप्यस्य वधकर्मैव भवति ।
तत्सख इन्द्रः शुष्णं जघानेति ।
ऐश्वर्यकर्माणि उत्तरे धातवश्चत्वारः ॥
ईश्वरनामान्युत्तराणि चत्वारि । तत्रेन इत्येतत् सनित ऐश्वर्येणेति वा
। सनितमनेनैश्वर्यमिति वा ११

यत्रा सुपर्णा अमृतस्य भागमनिमेषं विदथाभि स्वरन्ति ।

इनो विश्वस्य भुवनस्य गोपाः स मा धीरः पाकमत्रा विवेश ॥

यत्र सुपतना आदित्यरश्मयः । अमृतस्य भागमुदकस्य ।
अनिमिषन्तो वेदनेनाभिस्वरन्तीति वा । अभिप्रयन्तीति वा ।
ईश्वरः सर्वेषां भूतानां गोपायितादित्यः । स मा धीरः पाकमत्रा
विशेशेति । धीरो धीमान् । पाकः पक्तव्यो भवति ।
विपक्वप्रज्ञ आदित्यः ।
इत्युपनिषद्वर्णो भवति । इत्यधिदैवतम् ।
अथाध्यात्मम् । यत्र सुपतनानीन्द्रियाणि । अमृतस्य भागं
ज्ञानस्य । अनिमिषन्तो वेदनेनाभिस्वरन्तीति वा ।
अभिप्रयन्तीति वा । ईश्वरः सर्वेषामिन्द्रियाणां गोपायितात्मा ।
स मा धीरः पाकमत्रा विवेशेति । धीरो धीमान् । पाकः
पक्तव्यो भवति । विपक्वप्रज्ञ आत्मा । इत्यात्मगतिमाचष्टे १२

बहुनामान्युत्तराणि द्वादश । बहुः कस्मात् । प्रभवतीति सतः ॥
ह्रस्वनामान्युत्तराण्येकादश । ह्रस्वो ह्रसतेः ।
महन्नामान्युत्तराणि पञ्चविंशतिः । महान् कस्मात् ।
मानेनान्याञ्जहातीति शाकपूणिः । मंहनीयो भवतीति वा । बह्
ववक्षिथ विवक्षस इत्येते वक्तेर्वा वहतेर्वा साभ्यासात् ।
गृहनामान्युत्तराणि द्वाविंशतिः । गृहाः कस्मात् । गृह्णन्तीति
सताम् ।
परिचरणकर्माण उत्तरे धातवो दश ।
सुखनामान्युत्तराणि विंशतिः । सुखं कस्मात् । सुहितं खेभ्यः ।
खं पुनः खनतेः । रूपनामान्युत्तराणि षोडश । रूपं रोचतेः ।
प्रशस्यनामान्युत्तराणि दश ।
प्रज्ञानामान्युत्तराण्येकादश ।
सत्यनामान्युत्तराणि षट् । सत्यं कस्मात् । सत्सु तायते ।

सत्प्रभवं भवतीति वा ।
अष्टा उत्तराणि पदानि पश्यतिकर्माण उत्तरे धातवश्चायतिप्रभृतीनि च
। नामान्यामिश्राणि । नवोत्तराणि पदानि सर्वपदसमाम्नानाय ।
अथात उपमाः । यदतत्तत्सदृशमिति गार्ग्यः । तदासां कर्म ।
ज्यायसा वा गुणेन प्रख्याततमेन वा कनीयांसं वाप्रख्यातं
वोपमिमीते । अथापि कनीयसा ज्यायांसम् १३

तनूत्यजेव तस्करा वनर्गू रशनाभिर्दशभिरभ्यधीताम् ॥

तनूत्यक् तनूत्यक्ता । वनर्गू वनगामिनौ । अग्निमन्थनौ बाहू
तस्कराभ्यामुपमिमीते । तस्करस्तत्करोति यत्पापकमिति नैरुक्ताः
। तनोतेर्वा स्यात् । सन्ततकर्मा भवति । उहोरात्रकर्मा वा ।
रशनाभिर्दशभिरभ्यधीताम् । अभ्यधाताम् । ज्यायांस्तत्र
गुणोऽभिप्रेतः १४

कुह स्विद् दोषा कुह वस्तोरश्विना कुहाभिपित्वं करतः कुहोषतुः ।
को वां शयुत्रा विधवेव देवरं मर्यं न योषा कृणुते सधस्थ आ ॥

क स्विद्रात्रौ भवथः क्व दिवा । क्वाभिप्राप्तिं कुरुथः । क्व
वसथः । को वां शयने विधवेव देवरम् । देवरः कस्मात् ।
द्वितीयो वर उच्यते । विधवा विधातृका भवति । विधवनाद्वा
। विधावनाद्वेति चर्मशिराः । अपि वा धव इति मनुष्यनाम ।
तद्वियोगाद्विधवा । देवरो दीव्यतिकर्मा । मर्यो मनुष्यो
मरणधर्मा । योषा यौतेः । आकुरुते सधस्थाने ।
अथ निपाताः पुरस्तादेव व्याख्याताः । यथेति कर्मोपमा ।

यथा वातो यथा वनं यथा समुद्र एजति ॥
भ्राजन्तो अग्नयो यथा ॥
आत्मा यक्ष्मस्य नश्यति पुरा जीवगृभो यथा ॥

आत्माततेर्वा । आप्तेर्वा । अपि वाप्त इव स्यात् । यावद् व्याप्तिभूत इति ।

अ॒ग्निर्न ये भ्राज॑सा रु॒क्मव॑क्षसः ।

अग्निरिव ये भ्राजस्वन्तो रुक्मवक्षसः १५

च॒तुर॑श्चि॒द्दद॑मानाद्बिभी॒यादा निधा॑तोः ।
न दु॑रु॒क्ताय॑ स्पृहयेत् ॥

चतुरश्चिद् धारयत इति । तद्यथा कितवाद्बिभीयादेवमेव दुरुक्ताद्बिभीयात् । न दुरुक्ताय स्पृहयेत् कदाचित् ।
आ इत्याकार उपसर्गः पुरस्तादेव व्याख्यातः । अथाप्युपमार्थे दृश्यते ।

जा॒र आ भग॑म् ।

जार इव भगम् । आदित्योऽत्र जार उच्यते । रात्रेर्जरयिता । स एव भासाम् । तथापि निगमो भवति ।

स्वसु॑र्जा॒रः शृ॑णोतु नः । इति

उषसमस्य स्वसारमाह साहचर्यात् । रसहरणाद्वा । अपि त्वयं मनुष्यजार एवाभिप्रेतः स्यात् । स्त्रीभगस्तथा स्यात् । भजतेः ।
मेष इति भूतोपमा ।

मे॒षो भू॒तो३॑ भि य॒न्नयः॑ ।

मेषो मिषतेः । तथा पशुः पश्यतेः ।
अग्निरिति रूपोपमा ।

हिर॑ण्यरूपः॒ स हिर॑ण्यसंदृग॒पां नपा॒त्सेदु॒ हिर॑ण्यवर्णः ।

हिरगयवर्णस्येवास्य रूपम् ।
था इति च ।

तं प्रत्नथा पूर्वथा विश्वथेमथा ।

प्रत्न इव पूर्व इव विश्व इवेम इवेति । अयमेततरोऽमुष्मात् ।
असावस्ततरोऽस्मात् । अमुथा यथासाविति व्याख्यातम् ।
वदिति सिद्धोपमा ।
ब्राह्मणा इव वृषला इवेति । वृषलो वृषशीलो भवति ।
वृषाशीलो वा १६

प्रियमेधवदत्रिवज्जातवेदो विरूपवत् ।
अङ्गिरस्वन्महिव्रत प्रस्कगवस्य श्रुधी हवम् ॥

प्रियमेधः । प्रिया अस्य मेधा । यथैतेषामृषीणामेवं प्रस्कगवस्य
शृणु ह्वानम् । प्रस्कगवः कगवस्य पुत्रः । कगवप्रभवः । यथा
प्राग्रम् । अर्चिषि भृगुः संबभूव । भृगुर्भृज्यमानो न देहे ।
अङ्गारेष्वङ्गिराः । अङ्गारा अङ्कनाः । अत्रैव तृतीयमृच्छतेत्यूचुः ।
तस्मादत्रिः । न त्रय इति । विखननाद्वैखानसः ।
भरणाद्भारद्वाजः । विरूपो नानारूपः । महिव्रतो महाव्रत इति
१७

अथ लुप्तोपमान्यर्थोपमानीत्याचक्षते । सिंहो व्याघ्र इति पूजायाम्
। श्वा काक इति कुत्सायाम् । काक इति शब्दानुकृतिः ।
तदिदं शकुनिषु बहुलम् । न शब्दानुकृतिर्विद्यत इत्यौपमन्यवः ।
काकोऽपकालयितव्यो भवति । तित्तिरिस्तरणात् ।
तिलमात्रचित्र इति वा । कपिञ्जलः कपिरिव जीर्णः । कपिरिव
जवते । ईषत्पिङ्गलो वा । कमनीयं शब्दं पिञ्जयतीति वा ।
श्वा शुयायी । शवतेर्वास्याद्गतिकर्मणः । श्वसितेर्वा । सिंहः

सहनात् । हिंसेर्वा स्याद् विपरीतस्य । संपूर्वस्य वा हन्तेः ।
संहाय हन्तीति वा व्याघ्रो व्याघ्राणात् । व्यादाय हन्तीति वा १८

अर्चतिकर्माणि उत्तरे धातवश्चतुश्चत्वारिंशत् ।
मेधाविनामान्युत्तराणि चतुर्विंशतिः । मेधावी कस्मात् । मेधया तद्वान्भवति । मेधा मतौ धीयते ।
स्तोतृनामान्युत्तराणि त्रयोदश । स्तोता स्तवनात् ।
यज्ञनामान्युत्तराणि पञ्चदश । यज्ञः कस्मात् । प्रख्यातं यजति कर्मेति नैरुक्ताः । याच्ञो भवतीति वा । यजुरुन्नो भवतीति वा । बहुकृष्णाजिन इत्यौपमन्यवः । यजूंष्येनं नयन्तीति वा ।
ऋत्विङ्नामान्युत्तराण्यष्टौ । ऋत्विक् कस्मात् । ईरणः ।
ऋग्यष्टा भवतीति शाकपूणिः । ऋतुयाजी भवतीति वा ।
याच्ञाकर्माणि उत्तरे धातवः सप्तदश ।
दानकर्माणि उत्तरे धातवो दश ।
अध्येषणाकर्माणि उत्तरे धातवश्चत्वारः ।
स्वपितिसस्तीति द्वौ स्वपितिकर्माणौ ।
कूपनामान्युत्तराणि चतुर्दश । कूपः कस्मात् । कु पानं भवति । कुप्यतेर्वा ।
स्तेननामान्युत्तराणि चतुर्दश । स्तेनः कस्मात् ।
संस्त्यानमस्मिन्पापकमिति नैरुक्ताः ।
निर्णीतान्तर्हितनामधेयान्युत्तराणि षट् ।
दूरनामान्युत्तराणि पञ्च । दूरं कस्मात् । द्रुतं भवति । दुरयं वा ।
पुराणनामान्युत्तराणि षट् । पुराणं कस्मात् । पुरा नवं भवति ।
नवनामान्युत्तराणि षळेव । नवं कस्मात् । आनीतं भवति १९

द्विश उत्तराणि नामानि षड्विंशतिः । प्रपित्वेऽभीक इत्यासन्नस्य । प्रपित्वे प्राप्ते । अभीकेऽभ्यक्ते ।

आपित्वे नः प्रपित्वे तूयमा गहि ।
अभीके चिचुलोककृत् ।

इत्यपि निगमौ भवतः ।
दभ्रमर्भकमित्यल्पस्य । दभ्रं दभ्नोतेः । सुदम्भं भवति ।
अर्भकमवहृतं भवति ।

उपोप मे परा मृश मा मे दभ्राणि मन्यथाः ।
नमो महद्भ्यो नमो अर्भकेभ्यः ।

इत्यपि निगमौ भवतः ।
तिरः सत इति प्राप्तस्य । तिरस्तीर्णं भवति । सतः संसृतं भवति ।

तिरश्चिदर्यया परि वर्तिर्यातमदाभ्या ।
पात्रेव भिन्दन्सत एति रक्षसः ॥

इत्यपि निगमौ भवतः ।
त्वो नेम इत्यर्धस्य । त्वोऽपततः । नेमोऽपनीतः । अर्धं
हरतेर्विपरीतात् । धारयतेर्वा स्यात् । उद्धृतं भवति ।
ऋध्नोतेर्वा स्यात् । ऋद्धतमो विभागः ।

पीयति त्वो अनु त्वो गृणाति ।
नेमे देवा नेमेऽसुराः ।

इत्यपि निगमौ भवतः ।
ऋक्षाः स्तृभिरिति नक्षत्राणाम् । नक्षत्राणि नक्षतेर्गतिकर्मणः ।
नेमानि क्षत्राणि इति च ब्राह्मणम् । ऋक्षा उदीर्णानीव ख्यायन्ते
। स्तृभिस्तीर्णानीव ख्यायन्ते ।

अमी य ऋक्षा निहितास उच्चा ।

पश्यन्तो द्यामिव स्तृभिः ।

इत्यपि निगमौ भवतः ।
वम्रीभिरुपजिह्विका इति सीमिकानाम् । वम्र्यो वमनात् ।
सीमिका स्यमनात् । उपजिह्विका उपजिघ्र्यः ।

वम्रीभिः पुत्रमग्रुवो अदानम्
यदत्त्युपजिह्विका यद्वम्रो अतिसर्पति ।

इत्यपि निगमौ भवतः
ऊर्दरं कृदरमित्यावपनस्य । ऊर्दरमुद्दीर्णं भवति । ऊर्जे दीर्णं वा ।

तमूर्दरं न पृणता यवेन ।

इत्यपि निगमो भवति । तमूर्दरमिव पूरयति यवेन । कृदरं
कृतदरं भवति ।

समिद्धो अञ्जन् कृदरं मतीनाम् ।

इत्यपि निगमो भवति २०

रम्भः पिनाकमिति दण्डस्य । रम्भ आरभन्त एनम् ।

आ त्वा रम्भं न जिव्रयो ररम्भ ।

इत्यपि निगमो भवति । आरभामहे त्वा जीर्णा इव दण्डम् ।
पिनाकं प्रतिपिनष्ट्येनेन

कृत्तिवासाः पिनाकहस्तोऽवततधन्वा ।

इत्यपि निगमो भवति ।
मेना ग्ना इति स्त्रीणाम् । स्त्रियः स्त्यायतेरपत्रपणकर्मणः । मेना
मानयन्त्येनाः । ग्ना गच्छन्त्येनाः ।

अ॒मे॒नाँश्चि॒ज्जनि॑वतश्चकर्थ ।
ग्ना॑स्त्वाकृन्तन्नप॑सोऽतन्वत ।

इत्यपि निगमौ भवतः ।
शेपो वैतस इति पुंस्प्रजननस्य । शेपः शपतेः स्पृशतिकर्मणः ।
वैतसो वितस्तं भवति ।

यस्या॑मु॒शन्त॑ः प्र॒हरा॑म शेप॑म् ।
त्रिः स्म॒ माह्न॑ः श्नथयो वै॒तसेन॑ ।

इत्यपि निगमु भवतः ।
अथैनेत्युपदेशस्य ।

अ॒या ते॑ अग्ने स॒मिधा॑ विधेम॒ । इति स्त्रियाः ।
ए॒ना वो॑ अ॒ग्निम् । इति नपुंसकस्य ।
ए॒ना पत्या॑ त॒न्वं॑ संसृ॑ज॒स्व । इति पुंसः ।

सिषक्तु सचत इति सेवमानस्य ।

स न॑ः सिषक्तु॒ यस्तु॒रः । स नः सेवतां यस्तुरः ।
सच॑स्वा नः स्व॒स्तये॑ । सेवस्व नः स्वस्तये ।

स्वस्तीत्यविनाशनाम । अस्तिरभिपूजितः । सु अस्तीति ।
भ्यसते रेजत इति भयवेपनयोः ।

यस्य॒ शुष्मा॒द्रोद॑सी॒ अभ्य॑सेताम् ।
रेज॑ते अग्ने पृथि॒वी म॒खेभ्य॑ः ।

इत्यपि निगमौ भवतः ।
द्यावापृथिवीनामधेयान्युत्तराणि चतुर्विंशतिः ।
तयोरेषा भवति २१

कुतरा पूर्वा कतरापरायोः कुथाजाते कवयः को विवेद ।
विश्वं त्मना विभृतो यद्ध नाम वि वर्तेते अहनी चक्रियेव ॥

कतरा पूर्वा कतरापरैनयोः । कथं जाते । कवयः क एने विजानाति । सर्वमात्मना बिभृतो यद्ध । एनयोः कर्म । विवर्तेते चैनयोः । अहनी अहोरात्रे । चक्रियेव चक्रयुक्ते इवेति । द्यावापृथिव्योर्महिमानमाचष्ट आचष्टे २२

कर्मनामानि परिषद्यं न हि ग्रभाय शासद्वह्निरभ्रातेव न जामये मनुष्यनामानि तदद्य दशावनिभ्योऽभीदं त्वया वयं यत्रा सुपर्णा बहुनामानि तनूत्यजेव कुहस्विच्चतुरश्चित्प्रियमेधवदथ लुप्तोपमान्यर्चति द्विशो रम्भः कतरा पूर्वा द्वाविंशतिः ॥

इति निरुक्ते पूर्वषट्के तृतीयोऽध्यायः समाप्तः ॥

## अथ चतुर्थोऽध्यायः

एकार्थमनेकशब्दमित्येतदुक्तम् । अथ यान्यनेकार्थान्येकशब्दानि तान्यतोऽनुक्रमिष्यामः । अनवगतसंस्कारांश्च निगमान् । तदैकपदिकमित्याचक्षते ।
जहा जघानेत्यर्थः १

को नु म॑र्या॒ अमि॑थितः॒ सखा॒ सखा॑यमब्रवीत् ।
ज॒हा को अ॒स्मदी॑षते ॥

मर्या इति मनुष्यनाम । मर्यादाभिधानं वा स्यात् । मर्यादा मर्यादिनोर्विभागः । मेथतिराक्रोशकर्मा । अपापकं जघान कमहं जातु । कोऽस्मद्भीतः पलायते ।
निधा पाश्या भवति । यन्निधीयते । पाश्या पाशसमूहः ।
पाशः पाशयतेः । विपाशनात् २

वय॑ः सुप॒र्णा उप॑ सेदु॒रिन्द्रं॑ प्रि॒यमे॑धा॒ ऋष॑यो॒ नाध॑मानाः ।
अप॑ ध्वा॒न्तमू॑र्णु॒हि पू॒र्धि चक्षु॑र्मुमु॒ग्ध्य१॒ स्मान्नि॒धये॑व ब॒द्धान् ॥

वयो वेर्बहुवचनम् । सुपतना आदित्यरश्मय उपसेदुरिन्द्रं याचमानाः । अपोर्णुह्याध्वस्तं चक्षुः । चक्षुः ख्यातेर्वा । चष्टेर्वा । पूर्धि पूरय देहीति वा । मुञ्चास्मान् पाशैरिव बद्धान् ॥

पा॒र्श्व॒तः श्रो॑णि॒तः शि॑ताम॒तः ।

पार्श्वं पर्शुमयमङ्गं भवति । पर्शुः स्पृशतेः । संस्पृष्टा पृष्ठदेशम् । पृष्ठं स्पृशतेः ।
संस्पृष्टमङ्गैः । अङ्गमङ्गनात् । अञ्चनाद्वा । श्रोणिः श्रोणतेर्गतिचलाकर्मणः । श्रोणिश्चलतीव गच्छतः । दोः शिताम भवति । दोर्द्रवतेः । योनिः शितामेति शाकपूणिः । विषितो

भवति । श्यामतो यकृत्त इति तैटीकिः । श्यामं श्यायतेः ।
यकृद् यथा कथा च कृत्यते । शितिमांसतो मेदस्त इति गालवः
। शितिःश्यतेः । मांसं माननं वा । मानसं वा ।
मनोऽस्मिन्त्सीदतीति वा । मेदो मेद्यतेः ३

यदि॑न्द्र चित्र मे॒हनास्ति॒ त्वादा॑तमद्रिवः ।
राध॒स्तन्नो॑ विदद्वस उभयाह॒स्त्या भ॑र ॥

यदिन्द्र चायनीयं मंहनीयं धनमस्ति । यन्म इह नास्तीति वा ।
त्रीणि मध्यमानि पदानि । त्वया नस्तद् दातव्यम् । अद्रिवन् ।
अद्रिरादृणात्येनेन । अपि वात्तेः स्यात् ।

ते सो॒मादो॒ । इति ह विज्ञायते ।

राध इति धननाम । राध्नुवन्त्यनेन । तन्नस्त्वं वित्तधनोभाभ्यां
हस्ताभ्यामाहर ।
उभौ समुब्धौ भवतः ।
दमूना दममना वा । दानमना वा । दान्तमना वा । अपि वा
दम इति गृहनाम । तन्मनाः स्यात् । मनो मनोतेः ४

जु॒ष्टो॒ दमू॑ना॒ अति॑थिर्दु॒रो॒ण इ॒मं नो॑ य॒ज्ञमुप॑ याहि वि॒द्वान् ।
विश्वा॑ अग्ने अभि॒युजो॑ वि॒हत्या॑ शत्रूय॒तामा भ॑रा॒ भोज॑नानि ॥

अतिथिरभ्यतितो गृहान्भवति । अभ्येति तिथिषु परकुलानीति वा ।
गृहाणीति वा । दुरण इति गृहनाम । दुरवा भवन्ति दुस्तर्पाः ।
इमं नो यज्ञमुपयाहि विद्वान् । सर्वा अग्ने अभियुजो विहत्य
शत्रूयतामाभर भोजनानि । विहत्यान्येषां बलानि शत्रूणां
भवनादाहर भोजनानीति वा । धनानीति वा ।
मूषो मूषिका इत्यर्थः । मूषिकाः पुनर्मुष्णातेः । मूषोप्येतस्मादेव ५

सं मा तपन्त्यभितः सपत्नीरिव पर्शवः ।
मूषो न शिश्ना व्यदन्ति माध्यः स्तोतारं ते शतक्रतो
वित्तं मे अस्य रोदसी ॥

सन्तपन्ति मामभितः सपत्न्य इवेमाः पर्शवः कूपपर्शवः । मूषिका इवास्नातानि सूत्राणि व्यदन्ति । स्वाङ्गाभिधानं वा स्यात् । शिश्नानि व्यदन्तीति वा । सन्तपन्ति माध्यः कामाः । स्तोतारं ते शतक्रतो । जानीतं मेऽस्य द्यावापृथिव्याविति ।
त्रितं कूपेऽवहितमेतत्सूक्तं प्रतिबभौ । तत्र ब्रह्मेतिहासमिश्रमृङ्मिश्रं गाथामिश्रं भवति । त्रितस्तीर्णतमो मेधया बभूव । अपि वा संख्यानामैवाभिप्रेतं स्यात् । एकतो द्वितस्त्रित इति त्रयो बभूवुः ६

इषिरेण ते मनसा सुतस्य भक्षीमहि पित्र्यस्येव रायः ।
सोम राजन्प्र ण आयूंषि तारीरहानीव सूर्यो वासराणि ॥

ईषणेन वैषणेन वार्षणेन वा । ते मनसा सुतस्य भक्षीमहि पित्र्यस्येव धनस्य । प्रवर्धय च न आयूंषि सोमराजन् । अहानीव सूर्यो वासराणि । वासराणि वेसराणि विवासनानि गमनानीति वा ।
कुरुतनेत्यनर्थका उपजना भवन्ति । कर्तनहन्तनयातनेति । जठरमुदरं भवति । जग्धमस्मिन्ध्रियते धीयते वा ७

मरुत्वाँ इन्द्र वृषभो रणाय पिबा सोममनुष्वधं मदाय ।
आ सिञ्चस्व जठरे मध्व ऊर्मिं त्वं राजासि प्रदिवः सुतानाम् ॥

मरुत्वानिन्द्र तद्वान् । वृषभो वर्षितापाम् । रणाय रमणीयाय संग्रामाय । पिब सोमम् । अनुष्वधमन्वन्नम् । मदाय मदनीयाय जैत्राय । आसिञ्चस्व जठरे मधुन ऊर्मिम् । मधु सोममित्यौपमिकं माद्यतेः । इदमपीतरन्मध्वेतस्मादेव । त्वं

राजासि पूर्वेष्वप्यहःसु सुतानाम् ८

तितउ परिपवनं भवति । ततवद्वा । तन्नवद्वा ।
तिलमात्रतुन्नमिति वा ९

सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रत ।
अत्रा सखायः सख्यानि जानते भद्रैषां लक्ष्मीर्निहिताधि वाचि ॥

सक्तुमिव परिपवनेन पुनन्तः । सक्तुः सचतेः । दुर्धावो भवति ।
कसतेर्वा स्याद्विपरीतस्य । विकसितो भवति । यत्र धीरा
मनसा वाचमकृषत प्रज्ञानम् । धीराः प्रज्ञानवन्तो ध्यानवन्तः ।
तत्र सखायः सख्यानि संजानते । भद्रैषां लक्ष्मीर्निहिताधिवाचि
। भद्रं भगेन व्याख्यातम् । भजनीयं भूतानामभिद्रवणीयम् ।
भवद्रमयतीति वा । भाजनवद्वा । लक्ष्मीर्लाभाद्वा । लक्षणाद्वा
। लाञ्छनाद्वा । लषतेर्वा स्यात्प्रेप्साकर्मणः । लग्यतेर्वा
स्यादाश्लेषकर्मणः । लज्जतेर्वा स्यादश्लाघाकर्मणः ।
शिप्रे इत्युपरिष्टाद्व्याख्यास्यामः १०

तत्सूर्यस्य देवत्वं तन्महित्वं मध्या कर्तोर्विततं सं जभार ।
यदेदयुक्त हरितः सधस्थादाद्रात्री वासस्तनुते सिमस्मै ॥

तत्सूर्यस्य देवत्वं तन्महित्वं मध्ये यत्कर्मणां क्रियमाणानां विततं
संह्रियते । यदासावयुङ्क्त हरणानादित्यरश्मीन् । हरितोऽश्वानिति
वा । अथ रात्री वासस्तनुते सिमस्मै ।
वेसरमहरवयुवती सर्वस्मात् । अपि वोपमार्थे स्यात् । रात्रीव
वासस्तनुत इति । तथापि निगमो भवति ।
पुनः समव्यद्विततं वयन्ती । समनात्सोत् ११

इन्द्रेण सं हि दृक्षसे सञ्जग्मानो अबिभ्युषा

मन्दू संमानवर्चसा ॥

इन्द्रेण हि संदृश्यसे संगच्छमानोऽबिभ्युषा गणेन । मन्दू मदिष्णू । युवां स्थः । अपि वा मन्दुना तेनेति स्यात् ।
समानवर्चसेत्येतेन व्याख्यातम् १२

ईर्मान्तासः सिलिकमध्यमासः संशूरणासो दिव्यासो अत्याः ।
हंसा इव श्रेणिशो यतन्ते यदाक्षिषुर्दिव्यमज्ममश्वाः ॥

ईर्मान्ताः समीरितान्ताः । पृथ्वन्ता वा । सिलिकमध्यमाः संसृतमध्यमाः शीर्षमध्यमा वा । अपि वा शिर आदित्यो भवति । यदनुशेते सर्वाणि भूतानि । मध्ये चैषां तिष्ठति ।
इदमपीतरच्छिर एतस्मादेव । समाश्रितान्येतदिन्द्रियाणि भवन्ति ।
संशूरणासः शूरः शवतेर्गतिकर्मणः । दिव्या दिविजाः । अत्या अतनाः । हंसा इव श्रेणिशो यतन्ते । हंसा हन्तेर्घ्नन्त्यध्वानम् ।
श्रेणिः श्रयते । समाश्रिता भवन्ति । यदाक्षिषुर्यदापन् ।
दिव्यमज्ममजनिमाजिमश्वाः ।
अस्त्यादित्यस्तुतिरश्वस्य । आदित्यादश्वो निस्तष्ट इति ।

सूरादश्वं वसवो निरतष्ट । इत्यपि निगमो भवति १३

कायमानो वना त्वं यन्मातॄरजगन्नपः ।
न तत्ते अग्ने प्रमृषे निवर्तनं यद्दूरे सन्निहाभवः ॥

कायमानश्चायमानः कामयमान इति वा । वनानि । त्वं यन्मातॄरपोऽगम उपशाम्यन् । न तत्ते अग्ने प्रमृष्यते निवर्तनम् ।

दूरे यत् सन्निह भवसि जायमानः ।
लोधं नयन्ति पशु मन्यमानाः ।

लुब्धमृषिं नयन्ति पशुं मन्यमानाः ।

शीरं पावकशोचिषम् । पावकदीप्तिम् । अनुशायिनमिति वा ।
आशिनमिति वा १४

कनीनकेव विद्रधे नवे द्रुपदे अर्भके ।
बभ्रू यामेषु शोभेते ॥

कनीनके कन्यके । कन्या कमनीया भवति । क्वेयं नेतव्येति वा कनतेर्वा स्यात्कान्तिकर्मणः । कन्ययोरधिष्ठानप्रवचनानि । सप्तम्या एकवचनानीति शाकपूणिः । व्यृद्धयोर्दारुपाद्वोः । दारु दृणातेर्वा । द्रूणातेर्वा । तस्मादेव द्रु । नवे नवजाते । अर्भके अवृद्धे । ते यथा तदधिष्ठानेषु शोभेते एवं बभ्रू यामेषु शोभेते ।
बभ्र्वोरश्वयोः संस्तवः
इदं च मेऽदादिदं च मेऽदादित्यृषिः प्रसंख्यायाह ।

सुवास्त्वा अधि तुग्वनि ।

सुवास्तुर्नदी । तुग्व तीर्थं भवति । तूर्णमेतदायन्ति ।

कुविन्नंसन्ते मरुतः पुनर्नः ।

पुनर्नो नमन्ते मरुतः । नसन्त इत्युपरिष्टाद्व्याख्यास्यामः ।

ये ते मदा आहनसो विहायसस्तेभिरिन्द्रं चोदय दातवे मघम्

ये ते मदा आहननवन्तोवंचनवन्तस्तैरिन्द्रं चोदय दानाय मघम् १५

उपो अदर्शि शुन्ध्युवो न वक्षो नोधा इवाविरकृत प्रियाणि ।
अद्मसन्न ससतो बोधयन्ती शश्वत्तमागात्पुनरेयुषीणाम् ॥

उपादर्शि शुन्ध्युवः । शुन्ध्युरादित्यो भवति । शोधनात् ।

तस्यैव वन्नो भासाध्यूह्लम् । इदमपीतरद्वन्न एतस्मादेव । अध्यूह्लं काये । शकुनिरपि शुन्ध्युरुच्यते । शोधनादेव । उदकचरो भवति । आपोऽपि शुन्ध्युव उच्यन्ते । शोधनादेव । नोधा ऋषिर्भवति । नवनं दधाति । स यथा स्तुत्या कामानाविष्कुरुत एवमुषा रूपाण्याविष्कुरुते । अद्मसत् । अद्मान्नं भवति । अद्मसादिनीति वा । अद्मसानिनीति वा । ससतो बोधयन्ती । शश्वत्तमागात्पुनरेयुषीणाम् । शाश्वतिकतमागात्पुनरेयुषीणाम् ।

ते वाशीमन्त इष्मिणः ।

ईषणिन इति वैषणिन इति वार्षणिन इति वा । वाशीति वाङ्नाम । वाश्यत इति सत्याः ।

शंसावाध्वर्यो प्रति मे गृणीहीन्द्राय वाहः कृणवाव जुष्टम् ।

अभिवहनस्तुतिमभिषवणप्रवादां स्तुतिं मन्यन्ते । ऐन्द्री त्वेव शस्यते । परितक्म्येत्युपरिष्टाद् व्याख्यास्यामः १६

सुविते सु इते सूते सुगते । प्रजायामिति वा ।

सुविते मा धाः । इत्यपि निगमो भवति ।

दयतिरनेककर्मा ।

नवेन पूर्वं दयमानाः स्याम । इत्युपदयाकर्मा ।
य एक इद्विदयते वसु । इति दानकर्मा वा विभागकर्मा वा ।
दुर्वर्तुर्भीमो दयते वनानि । इति दहतिकर्मा । दुर्वर्तुर्दुर्वारः ।
विदद्वसुर्दयमानो वि शत्रून् । इति हिंसाकर्मा ॥
इमे सुता इन्दवः प्रातरित्वना सजोषसा पिबतमश्विना तान् ।
अहं हि वामूतये वन्दनाय मां वायसो दोषा दयमानो अबूबुधत् ॥

दयमान इति ।
नू चिदिति निपातः । पुराणनवयोः । नू चेति च ।

अद्या चिन्नू चित्तदपो नदीनाम् ।

अद्य च पुरा च तदेव कर्म नदीनाम् ।

नू च पुरा च सदनं रयीणाम् ।

अद्य च पुरा च सदनं रयीणाम् । रयिरिति धननाम ।
रातेर्दानकर्मणः १७

विद्याम तस्य ते वयमकूपारस्य दावने ।

विद्याम तस्य ते वयमकूपरणस्य दानस्य । आदित्योऽप्यकूपार उच्यते । अकूपारो भवति दूरपारः । समुद्रोऽप्यकूपार उच्यते । अकूपारो भवति महापारः । कच्छपोऽप्यकूपार उच्यते । अकूपारो न कूपमृच्छतीति । कच्छपः कच्छं पाति । कच्छेन पातीति वा । कच्छेन पिबतीति वा । कच्छः खच्छः खच्छदः । अयमपीतरो नदीकच्छ एतस्मादेव । कमुदकम् । तेन छाद्यते ।

शिशीते शृङ्गे रक्षसे विनिक्षे ।

निश्यति शृङ्गे रक्षसो विनिक्षणाय । रक्षो रक्षितव्यमस्मात् ।
रहसि क्षणोतीति वा । रात्रौ नक्षत इति वा ।

अग्निः सुतुकः सुतुकेभिरश्वैः ।

सुतुकनः सुतुकनैरिति वा । सुप्रजाः सुप्रजोभिरिति वा ।

सुप्रायणा अस्मिन्यज्ञे वि श्रयन्ताम् ।
सुप्रगमनाः १८

देवा नो यथा सदमिद्वृधे असन्नप्रायुवो रक्षितारो दिवेदिवे ।

देवा नो यथा सदा वर्धनाय स्युः । अप्रायुवोऽप्रमाद्यन्तः ।
रक्षितारश्च । अहन्यहनि ।
च्यवन ऋषिर्भवति । च्यावयिता स्तोमानाम् ।
च्यवानमित्यप्यस्य निगमा भवन्ति ।

युवं च्यवानं सनयं यथा रथं पुनर्युवानं चरथाय तक्षथुः ।

युवं च्यवनम् । सनयं पुराणम् । यथा रथं पुनर्युवानं चरणाय
ततक्षथुः । युवा प्रयौति कर्माणि । तक्षतिः करोतिकर्मा ।
रजो रजतेः । ज्योती रज उच्यते । उदकं रज उच्यते । लोका
रजांस्युच्यन्ते । असृगहनी रजसी उच्येते ।

रजांसि चित्रा वि चरन्ति तन्यवः । इत्यपि निगमो भवति ।

हरो हरतेः । ज्योतिर्हर उच्यते । उदकं हर उच्यते । लोका
हरांस्युच्यन्ते । असृगहनी हरसी उच्येते ।

प्रत्यग्ने हरसा हरः शृणीहि । इत्यपि निगमो भवति ।
जुहुरे वि चितयन्तः । जुह्विरे विचेतयमानाः ।

व्यन्त इत्येषोऽनेककर्मा ।

पदं देवस्य नमसा व्यन्तः । इति पश्यतिकर्मा ।
वीहि शूर पुरोळाशम् । इति खादतिकर्मा ।
वीतं पातं पयस उस्रियायाः । अश्नीतं पिबतं पयस उस्रियायाः
। उस्रियेति गोनाम । उस्राविणोऽस्यां भोगाः । उस्रेति च ।

त्वामिन्द्र मतिभिः सुते सुनीथासो वसूयवः ।
गोभिः क्राणा अनूषत ॥

गोभिः कुर्वाणा अस्तोषत ।

आ तू षिञ्च हरिमीं द्रोरुपस्थे वाशीभिस्तक्षताश्मन्मयीभिः ।

आसिञ्च हरिं द्रोरुपस्थे द्रुममयस्य । हरिः सोमो हरितवर्णः ।
अयमपीतरो हरिरेतस्मादेव । वाशीभिस्तक्षताश्मन्मयीभिः ।
वाशीभिरश्ममयीभिरिति वा । वाग्भिरिति वा ।

स शर्द्धदर्यो विषुणस्य जन्तोर्मा शिश्नदेवा अपि गुर्ऋतं नः ।

स उत्सहतां यो विषुणस्य जन्तोर्विषमस्य । मा शिश्नदेवा
अब्रह्मचर्याः । शिश्नं श्नथते । अपि गुर्ऋतं नः । सत्यं वा
यज्ञं वा १९

आ घा ता गच्छानुत्तरा युगानि यत्र जामयः कृणवन्नजामि ।
उप बर्बृहि वृषभाय बाहुमन्यमिच्छस्व सुभगे पतिं मत् ॥

आगमिष्यन्ति तान्युत्तराणि युगानि । यत्र जामयः
करिष्यन्त्यजामिकर्माणि । जाम्यतिरेकनाम । बालिशस्य वा ।
समानजातीयस्य वोपजनः । उपधेहि वृषभाय बाहुम् ।
अन्यमिच्छस्व सुभगे पतिं मदिति व्याख्यातम् २०

द्यौर्मे पिता जनिता नाभिरत्र बन्धुर्मे माता पृथिवी महीयम् ।
उत्तानयोश्चम्वो ३ र्योनिरन्तरत्रा पिता दुहितुर्गर्भमाधात् ॥

द्यौर्मे पिता पाता वा पालयिता वा जनयिता । नाभिरत्र बन्धुर्मे
माता पृथिवी महतीयम् । बन्धुः संबन्धनात् । नाभिः संनहनात् ।
नाभ्या सन्नद्धा गर्भा जायन्ते ।
इत्याहुः । एतस्मादेव ज्ञातीन् सनाभय इत्याचक्षते । सबन्धव
इति च । ज्ञातिः संज्ञानात् । उत्तानयोश्चम्वो ३ र्योनिरन्तः ।

उत्तान उत्ततानः । ऊर्ध्वतानो वा । तत्र पिता दुहितुर्गर्भं दधाति पर्जन्यः पृथिव्याः ।
शंयुः सुखंयुः ।

अथा नः शं योररपो दधात ।

रपो रिप्रमिति पापनामनी भवतः । शमनं च रोगाणां यावनं च भयानाम् । अथापि शंयुर्बार्हस्पत्य उच्यते ।

तच्छंयोरावृणीमहे गातुं यज्ञाय गातुं यज्ञपतये ।

इत्यपि निगमो भवति । गमनं यज्ञाय गमनं यज्ञपतये २१

अदितिरदीना देवमाता २२

अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः ।
विश्वे देवा अदितिः पञ्च जना अदितिर्जातमदितिर्जनित्वम् ॥

इत्यदितेर्विभूतिमाचष्टे । एनान्यदीनानीति वा ।
यमेरिरे भृगवः ।
एरिर इतीर्तिरुपसृष्टोऽभ्यस्तः २३

उत स्मैनं वस्त्रमथिं न तायुमनु क्रोशन्ति क्षितयो भरेषु ।
नीचायमानं जसुरिं न श्येनं श्रवश्चाच्छा पशुमच्च यूथम् ॥

अपि स्मैनं वस्त्रमथिमिव वस्त्रमाथिनम् । वस्त्रं वस्तेः ।
तायुरिति स्तेननाम ।
संस्त्यानमस्मिन् पापकमिति नैरुक्ताः । तस्यतेर्वा स्यात् ।
अनुक्रोशन्ति क्षितयः संग्रामेषु । भर इति संग्रामनाम । भरतेर्वा । हरतेर्वा । नीचायमानं नीचैरयमानम् ।
नीचैर्निचितं भवति । उच्चैरुच्चितं भवति । जस्तमिव श्येनम् ।

श्येनः शंसनीयं गच्छति । श्रवश्चाच्छा पशुमच्च । यूथम्
श्रवश्चापि पशुमच्च यूथम् । प्रशंसां च यूथं च । धनं च यूथं
चेति वा । यूथं यौतेः । समायुतं भवति ।

इन्धा॑न एनं जरते स्वा॒धीः । गृणाति ।

मन्दी मन्दतेः स्तुतिकर्मणः ।

प्र म॒न्दिने॑ पितु॒मद॑र्चता॒ वचः॑ । प्रार्चत मन्दिने पितुमद्वचः ।

गौर्व्याख्यातः २४

अत्राह॒ गोर॑मन्वत॒ नाम॒ त्वष्टु॑रपी॒च्य॑म् ।
इ॒त्था च॒न्द्रम॑सो गृ॒हे ॥

अत्र ह गोः सममंसतादित्यरश्मयः स्वं नाम । अपीच्यमपचितम्
। अपगतम् । अपिहितम् । अन्तर्हितं वा । अमुत्र चन्द्रमसो
गृहे ।
गातुर्व्याख्यातः ।

गा॒तुं कृ॑ण्वन्नु॒षसो॒ जना॑य । इत्यपि निगमो भवति ।

दंसयः कर्माणि । दंसयन्ति एनानि ।

कुत्सा॑य॒ मन्म॑न्न॒ह्य॑श्च द॒ंसयः॑ । इत्यपि निगमो भवति ।
स तू॑ताव॒ नैन॑मश्नोत्यंह॒तिः ।

स तुताव नैनमंहतिरश्नोति । अंहतिश्चांहश्चांहुश्च हन्तेः ।
निरूढोपधात् । विपरीतात् ।

बृह॑स्पते॒ चय॑से॒ इत्पिया॑रुम् ।

बृहस्पते यच्चातयसि देवपीयुम् । पीयतिर्हिंसाकर्मा । वियुते

द्यावापृथिव्यौ । वियवनात्

समान्या वियुते दूरेअन्ते ।

समानं संमानमात्रं भवति । मात्रा मानात् । दूरं व्याख्यातम् ।
अन्तोऽततः ।
ऋधगिति पृथग्भावस्य प्रवचनं भवति । अथाप्यृध्नोत्यर्थे दृश्यते ।

ऋधगया ऋधगुताशमिष्ठाः ।

ऋध्नुवन्नयाक्षीः । ऋध्नुवन्नशमिष्ठा इति च । अस्या इति चास्येति
चोदात्तं प्रथमादेशे । अनुदात्तमन्वादेशे । तीव्रार्थतरमुदात्तम् ।
अल्पीयोऽर्थतरमनुदात्तम् ।

अस्या ऊ षु ण उप सातये भुवोऽहेळमानो ररिवाँ अजाश्व ।
श्रवस्यतामजाश्व ।

अस्यै नः सातय उपभव । अहेळमानोऽक्रुध्यन् । ररिवान् ।
रातिरभ्यस्तः । अजाश्वेति पूषणमाह । अजाश्व अजा अजनाः ।
अथानुदात्तम् ।

दीर्घायुरस्या यः पतिर्जीवाति शरदः शतम् ।

दीर्घायुरस्या यः पतिर्जीवतु स शरदः शतम् । शरच्छृता
अस्यामोषधयो भवन्ति । शीर्णा आप इति वा ।
अस्येत्यस्या इत्येतेन व्याख्यातम् २५

अस्य वामस्य पलितस्य होतुस्तस्य भ्राता मध्यमो अस्त्यश्नः ।
तृतीयो भ्राता घृतपृष्ठो अस्यात्रापश्यं विश्पतिं सप्तपुत्रम् ॥

अस्य वामस्य वननीयस्य । पलितस्य पालयितुः ।
होतुर्ह्वातव्यस्य । तस्य भ्राता मध्यमोऽस्त्यशनः । भ्राता

भरतेर्हरतिकर्मणः । हरते भागं भर्तव्यो भवतीति वा । तृतीयो भ्राता घृतपृष्ठोऽस्यायमग्निः । तत्रापश्यं सर्वस्य पातारं वा पालयितारं वा । विश्पतिं सप्तपुत्रं सप्तमपुत्रं सर्पणपुत्रमिति वा । सप्त सृप्ता संख्या । सप्तादित्यरश्मय इति वदन्ति २६

सप्त युञ्जन्ति रथमेकचक्रमेको अश्वो वहति सप्तनामा ।
त्रिनाभि चक्रमजरमनर्वं यत्रेमा विश्वा भुवनाधि तस्थुः ॥

सप्त युञ्जन्ति रथम् । एकचक्रमेकचारिणम् । चक्रं चकतेर्वा । चरतेर्वा । क्रामतेर्वा । एकोऽश्वो वहति सप्तनामादित्यः । सप्तास्मै रश्मयो रसानभिसन्नामयन्ति । सप्तैनमृषयः स्तुवन्तीति वा । इदमपीतरन्नामैतस्मादेव । अभिसन्नामात् । संवत्सरप्रधान उत्तरोऽर्धर्चः । त्रिनाभि चक्रम् । त्र्यृतुः संवत्सरः । ग्रीष्मो वर्षा हेमन्त इति । संवत्सरः संवसन्तेऽस्मिन्भूतानि । ग्रीष्मो ग्रस्यन्तेऽस्मिन्रसाः । वर्षा वर्षत्यासु पर्जन्यः । हेमन्तो हिमवान् । हिमं पुनर्हन्तेर्वा । हिनोतेर्वा । अजरमजरणधर्माणम् । अनर्वमप्रत्यृतमन्यस्मिन् । यत्रेमानि सर्वाणि भूतान्यभिसन्तिष्ठन्ते । तं संवत्सरं सर्वमात्राभिः स्तौति ।

पञ्चारे चक्रे परिवर्तमाने ।

इति पञ्चर्तुतया ।
पञ्चर्तवः संवत्सरस्य ।
इति च ब्राह्मणम् । हेमन्तशिशिरयोः समासेन ।

षळर आहुरर्पितम् ।

इति षळृतुतया । अराः प्रत्यृता नाभौ । षट्पुनः सहतेः ।
द्वादशारं नहि तज्जराय ।

द्वादश प्रधयश्चक्रमेकम् ।

इति मासानाम् । मासा मानात् । प्रधिः प्रहितो भवति ।

तस्मिन्त्साकं त्रिंशता न शङ्कवोऽर्पिताः षष्टिर्न चलाचलासः ।

षष्टिश्च ह वै त्रीणि च शतानि संवत्सरस्याहोरात्राः ।
इति च ब्राह्मणं समासेन ।

सप्त शतानि विंशतिश्च तस्थुः ।

सप्त च वै शतानि विंशतिश्च संवत्सरस्याहोरात्राः ।
इति च ब्राह्मणं विभागेन विभागेन २७

एकार्थं कोनु वयः सुपर्णा यदिन्द्र जुष्टो दमूनाः सं मा तपन्तीषिरेण
मरुत्वांस्तितउ सक्तुमिव त्सूर्यस्येन्द्रेण समीर्मान्तासः कायमानः
कनीनकेवोपो अदर्शि सुविते विद्याम देवानो आघा
द्यौर्मेऽदितिरदितिरुतस्मात्राहास्य वामस्य सप्त युञ्जन्ति सप्तविंशतिः
इति निरुक्ते पूर्वषट्के चतुर्थोऽध्यायः समाप्तः

## अथ पञ्चमोऽध्यायः

सस्निमविन्दच्चरणे नदीनाम् । सस्निं संस्नातं मेघम् ।
वाहिष्ठो वां हवानां स्तोमो दूतो हुवन्नरा ।

वोढृतमो ह्वानानां स्तोमो दूतो हुवन्नरौ । नरा मनुष्या नृत्यन्ति कर्मसु । दूतो जवतेर्वा । द्रवतेर्वा । वारयतेर्वा ।

दूतो देवानामसि मर्त्यानाम् । इत्यपि निगमो भवति ।

वावशानो वष्टेर्वा । वाश्यतेर्वा ।
सप्त स्वसृररुषीर्वावशानः । इत्यपि निगमो भवति ।

वार्यं वृणोतेः । अथापि वरतमम् ।

तद्वार्यं वृणीमहे वरिष्ठं गोपयत्यम् ।

तद्वार्यं वृणीमहे । वर्षिष्ठं गोपायितव्यम् । गोपायितारो यूयं स्थ । युष्मभ्यमिति वा ।
अन्ध इत्यन्ननाम । आध्यानीयं भवति ।

आमत्रेभिः सिञ्चता मद्यमन्धः ।

आसिञ्चतामत्रैर्मदनीयमन्धः । अमत्रं पात्रम् । अमा अस्मिन्मदन्ति । अमा पुनरनिर्मितं भवति । पात्रं पानात् ।
तमोऽप्यन्ध उच्यते । नास्मिन्ध्यानं भवति । न दर्शनम् ।
अन्धन्तम इत्यभिभाषन्ते । अयमपीतरोऽन्ध एतस्मादेव ।

पश्यदक्षण्वान्न वि चेतदन्धः । इत्यपि निगमो भवति १

असश्चन्ती भूरिधारे पयस्वती ।

असज्यमाने इति वा । अव्युदस्यन्त्याविति वा । बहुधारे

उदकवत्यौ ।
वनुष्यतिर्हन्तिकर्मा । अनवगतसंस्कारो भवति ।

वनुयाम वनुष्यतः । इत्यपि निगमो भवति ।
दीर्घप्रयज्युमति यो वनुष्यति वयं जयेम पृतनासु दूढ्यः ।

दीर्घप्रततयज्ञमभिजिघांसति यो वयं तं जयेम पृतनासु । दूढ्यं दुर्धियं पापधियम् । पापः पाताऽपेयानाम् । पापत्यमानोऽवाङेव पततीति वा । पापत्यतेर्वा स्यात् । तरुष्यतिरप्येवंकर्मा ।

इन्द्रेण युजा तरुषेम वृत्रम् ।

इत्यपि निगमो भवति । मन्दना भन्दतेः स्तुतिकर्मणः ।

पुरुप्रियो भन्दते धामभिः कविः । इत्यपि निगमो भवति ।
स भन्दना उदियर्ति प्रजावतीः । इति च ।
अन्येन मदाहनो याहि तूयम् ।

अन्येन मदहनो गच्छ क्षिप्रम् । आहंसीव भाषमाणेत्यसभ्यभाषणादाहना इव भवति । एतस्मादाहनः स्यात् । ऋषिर्नदो भवति । नदतेः स्तुतिकर्मणः ।

नदस्य मा रुधतः काम आगन् ।

नदनस्य मा रुधतः काम आगमत् । संरुद्धप्रजननस्य ब्रह्मचारिणः । इत्युषिपुत्र्या विलपितं वेदयन्ते २

न यस्य द्यावापृथिवी न धन्व नान्तरिक्षं नाद्रयः सोमो अक्षाः ।

अश्नोतेरित्येवमेके ।

अनूपे गोमान्गोभिरक्षाः सोमो दुग्धाभिरक्षाः ।

लोपाशः सिंहं प्रयञ्चंमत्साः ।

क्षियतिनिगमः पूर्वः क्षरतिनिगम उत्तर इत्येके । अनूपे गोमान् गोभिर्यदा क्षियत्यथ सोमो दुग्धाभ्यः क्षरति । सर्वे क्षियतिनिगमा इति शाकपूणिः ।
श्वात्रमिति क्षिप्रनाम । आशु अतनं भवति ।

स पतत्रीत्वरं स्था जगद्यच्छ्वात्रमग्निरकृणोज्जातवेदाः ।

स पतत्रि चेत्वरं स्थावरं जङ्गमं च यत्तत् क्षिप्रमग्निरकरोज्जातवेदाः । ऊतिरवनात् ।

आ त्वा रथं यथोतये । इत्यपि निगमो भवति ।

हासमाने इत्युपरिष्टाद् व्याख्यास्यामः ।

वम्रकः षड्भिरुप सर्पदिन्द्रम् ।

पानैरिति वा । स्पाशनैरिति वा ।

ससं न पक्वमविदच्छुचन्तम् ।

स्वप्नमेतन्माध्यमिकं ज्योतिरनित्यदर्शनम् ।
तदिवाविदज्जाज्वल्यमानम् ।

द्विता च सत्ता स्वधया च शंभुः ।

द्वैधं सत्ता मध्यमे च स्थान उत्तमे च । शंभुः सुखभूः ।

मृगं न व्रा मृगयन्ते ।

मृगमिव व्रात्याः प्रैषाः ३

वराहो मेघो भवति । वराहारः ।

वरमाहारमाहार्षीः । इति च ब्राह्मणम् ।

विध्यद्वराहं तिरो अद्रिमस्ता । इत्यपि निगमो भवति ।

अयमपीतरो वराह एतस्मादेव । बृहति मूलानि । वरं वरं मूलं बृहतीति वा ।

वराहमिन्द्र एमुषम् । इत्यपि निगमो भवति ।

अङ्गिरसोऽपि वराहा उच्यन्ते ।

ब्रह्मणस्पतिर्वृषभिर्वराहैः ।
अथाप्येते माध्यमका देवगणा वराहव उच्यन्ते ।

पश्यन्हिरण्यचक्रानयोदंष्ट्रान्विधावतो वराहून् ।

स्वसराण्यहानि भवन्ति । स्वयं सारीण्यपि वा । स्वरादित्यो भवति । स एनानि सारयति ।

उस्रा इव स्वसराणि । इत्यपि निगमो भवति ।

शर्या अंगुलयो भवन्ति । सृजन्ति कर्माणि शर्या इषवः शरमय्यः । शरः शृणातेः ।

शर्याभिर्न भरमाणो गभस्त्योः ।

इत्यपि निगमो भवति ।
अर्को देवो भवति । यदेनमर्चन्ति । अर्को मन्त्रो भवति । यदनेनार्चन्ति । अर्कमन्नं भवति । अर्चति भूतानि । अर्को वृक्षो भवति । संवृत्तः कटुकिम्ना ४

गायन्ति त्वा गायत्रिणोऽर्चन्त्यर्कमर्किणः ।
ब्रह्माणस्त्वा शतक्रत उद्वंशमिव येमिरे ॥

गायन्ति त्वा गायत्रिणः । प्रार्चन्ति तेऽर्कमर्किणः । ब्रह्माणस्त्वा शतक्रत उद्येमिरे वंशमिव । वंशो वनशयो भवति ।
वननाच्छ्रूयत इति वा ।
पवी रथनेमिर्भवति । यद्विपुनाति भूमिम् ।

उ॒त प॒व्या रथा॑ना॒मद्रिं॑ भिन्द॒न्त्योज॑सा ।
तं म॒रुतः॑ क्षु॒रप॑विना व्ययुः ।

इत्यपि निगमौ भवतः । वक्षो व्याख्यातम् ।
धन्वान्तरिक्षम् । धन्वन्त्यस्मादापः ।
ति॒रो धन्वा॑ति॒ रोच॑ते । इत्यपि निगमो भवति ।

सिनमन्नं भवति । सिनाति भूतानि ।

येन॑ स्मा॒ सिनं॒ भर॑थः॒ सखि॑भ्यः । इत्यपि निगमो भवति ।

इत्थामुथेत्येतेन व्याख्यातम् ।
सचा सहेत्यर्थः ।

वसुभिः सचा॒ भुवा॑ । वसुभिः सह भुवौ ।

चिदिति निपातोऽनुदात्तः पुरस्तादेव व्याख्यातः । अथापि पशुनामेह भवत्युदात्तः ।

चिद॑सि म॒नासि॑ । चितास्त्वयि भोगाः । चेतयसे इति वा ।

आ इत्याकार उपसर्गः पुरस्तादेव व्याख्यातः । अथाप्यध्यर्थे दृश्यते ।

अ॒भ्र आँ अ॒पः । अभ्रा आ अपोऽभ्रेऽध्यय इति ।

द्युम्नं द्योततेः । यशो वान्नं वा ।

अस्मे द्युम्नमधि रत्नं च धेहि । अस्मासु द्युम्नं च रत्नं च धेहि ५

पवित्रं पुनातेः । मन्त्रः पवित्रमुच्यते ।
येन देवाः पवित्रेणात्मानं पुनते सदा । इत्यपि निगमो भवति ।

रश्मयः पवित्रमुच्यन्ते ।

गभस्तिपूतः नृभिरद्रिभिः सुतः । इत्यपि निगमो भवति ।

आपः पवित्रमुच्यन्ते ।

शतपवित्राः स्वधया मदन्तीः । बहूदकाः ।
अग्निः पवित्रमुच्यते । वायुः पवित्रमुच्यते । सोमः पवित्रमुच्यते
। सूर्यः पवित्रमुच्यते । इन्द्रः पवित्रमुच्यते ।

अग्निः पवित्रं स मा पुनातु वायुः सोमः सूर्य इन्द्रः ।
पवित्रं ते मा पुनन्तु । इत्यपि निगमो भवति ।

तोदस्तुद्यतेः ६

पुरु त्वा दाश्वान्वोचेऽरिरग्ने तव स्विदा ।
तोदस्येव शरण आ महस्य ॥

बहु दाश्वांस्त्वामेवाभिह्वयामि । अरिरमित्र ऋच्छतेः ।
ईश्वरोऽप्यरीरेतस्मादेव । यदन्यदेवत्या अग्नावाहुतयो हूयन्त
इत्येतद् दृष्ट्वैवमवक्ष्यत् । तोदस्येव शरण आ महस्य । तुदस्येव
शरणेऽधिमहतः ।
स्वञ्चाः सु अञ्चनः ।

आ जुह्वानो घृतपृष्ठः स्वञ्चाः । इत्यपि निगमो भवति ।

शिपिविष्टो विष्णुरिति विष्णोर्द्वे नामनी भवतः । कुत्सितार्थीयं

पूर्वं भवतीत्यौपमन्यवः ७

किमित्ते विष्णो परिचक्ष्यं भूत्प्र यद्ववक्षे शिपिविष्टो अस्मि ।
मा वर्पो अस्मदप गूह एतद् यदन्यरूपः समिथे बभूथ ॥

किं ते विष्णोऽप्रख्यातमेतद्भवत्यप्रख्यापनीयं यन्नः प्रब्रूषे शेप इव निर्वेष्टितोऽस्मीत्यप्रतिपन्नरश्मिः । अपि वा प्रशंसानामैवाभिप्रेतं स्यात् । किं ते विष्णो प्रख्यातमेतद्भवति प्रख्यापनीयं यदुत प्रब्रूषे शिपिविष्टोऽस्मीति प्रतिपन्नरश्मिः ।
शिपयोऽत्र रश्मय उच्यन्ते । तैराविष्टो भवति । मा वर्पो अस्मदप गूह एतत् । वर्प इति रूपनाम । वृणोतीति सतः । यदन्यरूपः समिथे संग्रामे भवसि संयतरश्मिः ।
तस्योत्तरा भूयसे निर्वचनाय ८

प्र तत्ते अद्य शिपिविष्ट नामार्यः शंसामि वयुनानि विद्वान् ।
तं त्वा गृणामि तवसमतव्यान्क्षयन्तमस्य रजसः पराके ॥

तत्तेऽद्य शिपिविष्ट नामार्यः प्रशंसामि । अर्योऽहमस्मीश्वरः स्तोमानाम् । अर्यस्त्वमसीति वा । तं त्वा स्तौमि तवसमतव्यान् । तवस इति महतो नामधेयम् । उदितो भवति । निवसन्तमस्य रजसः । पराके पराक्रान्ते ।
आघृणिरागतहृणिः ।

आ घृणे सं सचावहै । आगतहृणे संसेवावहै । पृथुज्रयाः पृथुजवः ।
पृथुज्रया अमिनादायुर्दस्योः । प्रामापयदायुर्दस्योः ९

अग्निं नरो दीधितिभिररण्योर्हस्तच्युती जनयन्त प्रशस्तम् ।
दूरेदृशं गृहपतिमथर्युम् ॥

दीधितयोऽङ्गुलयो भवन्ति । धीयन्ते कर्मसु । अरणी प्रत्यृत एने अग्निः । समरणाज्जायत इति वा । हस्तच्युती हस्तप्रच्युत्या । जनयन्त प्रशस्तं दूरे दर्शनं गृहपतिमतनवन्तम् १०

एकया प्रतिधा पिबत्साकं सरांसि त्रिंशतम् ।
इन्द्रः सोमस्य काणुका ॥

एकेन प्रतिधानेनापिबत् । साकं सहेत्यर्थः । इन्द्रः सोमस्य काणुका । कान्तकानीति वा । क्रान्तकानीति वा । कृतकानीति वा । इन्द्रः सोमस्य कान्त इति वा । कणेघात इति वा । कणेहतः । कान्तिहतः ।
तत्रैतद् याज्ञिका वेदयन्ते । त्रिंशदुक्थपात्राणि माध्यन्दिने सवन एकदेवतानि । तान्येतस्मिन् काल एकेन प्रतिधानेन पिबन्ति । तान्यत्र सरांस्युच्यन्ते । त्रिंशदपरपक्षस्याहोरात्राः । त्रिंशत्पूर्वपक्षस्येति नैरुक्ताः । तद्या एताश्चान्द्रमस्य आगामिन्य आपो भवन्ति रश्मयस्ता अपरपक्षे पिबन्ति । तथापि निगमो भवति ।

यमक्षितिमक्षितयः पिबन्ति । इति ।

तं पूर्वपक्ष आप्याययन्ति । तथापि निगमो भवति ।

यथा देवा अंशुमाप्याययन्ति । इति ।

अध्रिगुर्मन्त्रो भवति । गव्यधिकृतत्वात् । अपि वा प्रशासनमेवाभिप्रेतं स्यात् । शब्दवत्त्वात् ।
अध्रिगो शमीध्वं सुशमि शमीध्वं शमीध्वमध्रिगविति ।
अग्निरप्यध्रिगुरुच्यते ।

तुभ्यं श्चोतन्त्यध्रिगो शचीवः । अधृतगमनकर्मवन् ।

इन्द्रोऽप्यध्रिगुरुच्यते ।

अध्रिगव ओहमिन्द्राय । इत्यपि निगमो भवति ।

आङ्गूषः स्तोम आघोषः ।

एनाङ्गूषेण वयमिन्द्रवन्तः ।

अनेन स्तोमेन वयमिन्द्रवन्तः ११

आपान्तमन्युस्तृपलप्रभर्मा धुनिः शिमीवाञ्छरुमाँ ऋजीषी ।
सोमो विश्वान्यतसा वनानि नार्वागिन्द्रं प्रतिमानानि देभुः ॥

आपातितमन्युः । तृप्रप्रहारी । क्षिप्रप्रहारी सृप्रप्रहारी सोमो वेन्द्रो वा । धुनिर्धूनोतेः । शिमीति कर्मनाम । शमयतेर्वा । शक्नोतेर्वा । ऋजीषी सोमः । यत्सोमस्य पूयमानस्यातिरिच्यते तदृजीषमपार्जितं भवति । तेनर्जीषी सोमः । अथाप्यैन्द्रो निगमो भवति ।

ऋजीषी वज्री । इति ।

हर्योरस्य स भागो धानाश्चेति । धाना भ्राष्ट्रे हिता भवन्ति । फले हिता भवन्तीति वा ।

बब्धां ते हरी धाना उप ऋजीषं जिघ्रताम् ।

इत्यपि निगमो भवति । आदिनाभ्यासेनोपहितेनोपधामादत्ते । बभस्तिरत्तिकर्मा । सोमः सर्वाण्यतसानि वनानि । नार्वागिन्द्रं प्रतिमानानि दभ्नुवन्ति । यैरेनं प्रतिमिमते नैनं तानि दभ्नुवन्ति । अर्वागेवैनमप्राप्य विनश्यन्तीति । इन्द्रप्रधानेत्येके । नैघण्टुकं सोमकर्म । उभयप्रधानेत्यपरम् ।
श्मशा शु अश्नुत इति वा । श्माश्नुत इति वा ।

अव॑ श्म॒शा रु॑ध॒द्वाः ।

अवारुधच्छ्मशा वारिति १२

उर्वश्यप्सरा । उर्वभ्यश्नुते । ऊरुभ्यामश्नुते । उरुर्वा वशोऽस्याः । अप्सरा अप्सारिणी । अपि वाप्स इति रूपनाम । अप्सातेः । अप्सानीयं भवति । आदर्शनीयम् । व्यापनीयं वा । स्पष्टं दर्शनायेति शाकपूणिः ।
यदप्स॑ः । इत्यभक्षस्य ।
अप्सो॒ नाम॑ ।

इति व्यापिनः । तद्रा भवति रूपवती । तदनयात्तमिति वा । तदस्यै दत्तमिति वा । तस्या दर्शनान्मित्रावरुणयो रेतश्चस्कन्द । तदभिवादिन्येषर्ग्भवति १३

उ॒तासि॑ मैत्रावरु॒णो व॑सिष्ठो॒र्वश्या॑ ब्रह्म॒न्मन॒सोऽधि॑जा॒तः ।
द्र॒प्सं स्क॒न्नं ब्रह्म॑णा॒ दैव्ये॑न॒ विश्वे॑दे॒वाः पुष्क॑रे त्वाददन्त ॥

अप्यसि मैत्रावरुणो वसिष्ठ । उर्वश्या ब्रह्मन् मनसोऽधिजातः । द्रप्सं स्कन्नम् । ब्रह्मणा दैव्येन । द्रप्सः संभृतः । प्सानीयो भवति । सर्वे देवाः पुष्करे त्वाधारयन्त । पुष्करमन्तरिक्षम् । पोषति भूतानि । उदकं पुष्करम् । पूजाकरम् । पूजयितव्यम् । इदमपीतरत्पुष्करमेतस्मादेव । पुष्करं वपुष्करं वा । पुष्पं पुष्पतेः ।
वयुनं वेतेः । कान्तिर्वा । प्रज्ञा वा १४

स इत्तमो॑ऽवयु॒नं त॑त॒न्वत्सूर्ये॑ण व॒युन॑वच्चकार ।

स तमोऽप्रज्ञानं ततन्वत् । स तं सूर्येण प्रज्ञानवच्चकार ।

वाजपस्त्यं वाजपतनम् ।

सुनेम वाजपस्त्यं । इत्यपि निगमो भवति ।

वाजगन्ध्यं गध्यत्युत्तरपदम् ।

अश्याम वाजगन्ध्यम् । इत्यपि निगमो भवति ।

गध्यं गृह्णातेः ।

ऋज्रा वाजं न गध्यं युयूषन् । इत्यपि निगमो भवति ।
गध्यतिर्मिश्रीभावकर्मा ।

आ गधिता परि गधिता । इत्यपि निगमो भवति । कौरयाणः
कृतयानः ।
पाकस्थामा कौरयाणः । इत्यपि निगमो भवति ।

तौरयाणस्तूर्णयानः ।

स तौरयाण उप याहि यज्ञं मरुद्भिरिन्द्र सखिभिः सजोषाः ।

इत्यपि निगमो भवति ।
अह्रयाणोऽह्रीतयानः ।

अनुष्टुया कृणुह्यह्रयाणः । इत्यपि निगमो भवति ।

हरयाणो हरमाणयानः ।

रजतं हरयाणे । इत्यपि निगमो भवति ।
य आरितः कर्मणिकर्मणि स्थिरः । प्रत्यृतः स्तोमान् ।

व्रन्दी व्रन्दतेर्मृदूभावकर्मणः १५

नि यद्वृणक्षि श्वसनस्य मूर्धनि शुष्णस्य चिद्व्रन्दिनो रोरुवद्वना ।

निवृणाति यच्छ्वसनस्य मूर्धनि शब्दकारिणः । शुष्णस्यादित्यस्य च शोषयितू । रोरूयमाणो वनानीति वा । वधेनेति वा ।

अव्रंदन्त वीळिता । इत्यपि निगमो भवति ।

वीळयतिश्च व्रीळयतिश्च संस्तम्भकर्माणौ । पूवेण संप्रयुज्येते । निष्षपी स्त्रीकामो भवति । विनिर्गतसपः । सपः सपतेः स्पृशतिकर्मणः ।

मा नो मघेव निष्षपी परा दाः ।

स यथा धनानि विनाशयति मा नस्त्वं तथा परादाः । तूर्णाशमुदकं भवति । तूर्णमश्नुते ।

तूर्णाशं न गिरेरधि । इत्यपि निगमो भवति ।

क्षुम्पमहिच्छत्रकं भवति । यत् क्षुभ्यते १६

कुदा मर्तमराधसं पदा क्षुम्पमिव स्फुरत् ।
कुदा नः शुश्रवद्गिर इन्द्रो अङ्ग ॥

कदा मर्तमनाराधयन्तं पादेन क्षुम्पमिवावस्फुरिष्यति । कदा नः श्रोष्यति च गिर इन्द्रो अङ्ग । अङ्गेति क्षिप्रनाम । अङ्कित-मेवाञ्चितं भवति ।
निचुम्पुणः सोमः । निचान्तपृणः । निचमनेन प्रीणाति १७

पत्नीवन्तः सुता इम उशन्तो यन्ति वीतये ।
अपां जग्मिर्निचुम्पुणः ॥

पत्नीवन्तः सुता इमेऽद्भिः सोमाः कामयमाना यन्ति वीतये पानायापाम् ।
गन्ता निचुम्पुणः ।

समुद्रोऽपि निचुंपुण उच्यते । निचमनेन पूर्यते । अवभृथोऽपि निचुंपुण उच्यते । नीचैरस्मिन् क्वणन्ति । नीचैर्दधतीति वा ।

अर्वृभृथ निचुम्पुणः । इत्यपि निगमो भवति ।

निचुंपुण निचुंकुणेति च ।
पदिर्गन्तुर्भवति । यत्पद्यते १८

सुगुरसत्सुहिरण्यः स्वश्वो बृहदस्मै वय इन्द्रो दधाति ।
यस्त्वा यन्तं वसुना प्रातरित्वो मुक्षीजयेव पदिमुत्सिनाति ॥

सुगुर्भवति । सुहिरण्यः । स्वश्वः । महच्चास्मै वय इन्द्रो दधाति यस्त्वा यन्तमन्नेन । प्रातरागामिन्नतिथे । मुक्षीजयेव पदिमुत्सिनाति कुमारः । मुक्षीजा मोचनाच्च । शयनाच्च । ततनाच्च ।
पादुः पद्यतेः ।

आविः स्वः कृणुते गूहते बुसं स पादुरस्य निर्णिजो न मुच्यते ।

आविष्कुरुते भासमादित्यः । गूहते बुसम् । बुसमित्युदकनाम । ब्रवीतेः शब्दकर्मणः । भ्रंशतेर्वा । यद्वर्षन्पातयत्युदकं रश्मिभिस्तत्प्रत्यादत्ते १९

वृकश्चन्द्रमा भवति । विवृतज्योतिष्को वा । विकृतज्योतिष्को वा । विक्रान्तज्योतिष्को वा २०

अरुणो मासकृद्वृकः पथा यन्तं ददर्श हि ।
उज्जिहीते निचाय्या तष्टेव पृष्ठ्यामयी वित्तं मे अस्य रोदसी ॥

अरुण आरोचनः । मासकृन्मासानां चार्धमासानां च कर्ता भवति चन्द्रमाः । वृकः पथा यन्तं ददर्श नक्षत्रगणम् । अभिजिहीते

निचाय्य येन येन योद्‌यमाणो भवति चन्द्रमाः । तद्‌गुणवन्निव
पृष्ठरोगी । जानीतं मेऽस्य द्यावापृथिव्याविति ।
आदित्योऽपि वृक उच्यते । यदा वृङ्क्ते ।

अजोहवीदश्विना वर्तिका वामास्नो यत्सीममुञ्चतं वृकस्य ।

आह्वयदुषा अश्विनावादित्येनाभिग्रस्ता । तामश्विनौ प्रमुमुचतुः ।
इत्याख्यानम् । श्वापि वृक उच्यते । विकर्तनात् ।

वृकश्चिदस्य वारण उरामथिः । उरणमथिः ।
उरण ऊर्णावान्भवति । ऊर्णा पुनर्वृणोतेः । ऊर्णोतेर्वा ।
वृद्धवाशिन्यपि वृक्युच्यते ।

शतं मेषान्वृक्यै चक्षदानमृज्राश्वं तं पितान्धं चकार ।

इत्यपि निगमो भवति ।
जोषवाकं इत्यविज्ञातनामधेयम् । जोषयितव्यं भवति २१

य इन्द्राग्नी सुतेषु वां स्तवत्तेष्वृतावृधा ।
जोषवाकं वदतः पज्रहोषिणा न देवा भसथश्चन ॥

य इन्द्राग्नी सुतेषु वां सोमेषु स्तौति तस्याश्नीथः । अथ योऽयं
जोषवाकं वदति विजंजपः प्रार्जितहोषिणौ न देवौ तस्याश्नीथः ।
कृत्तिः कृन्ततेः । यशो वा । अन्नं वा ।

महीव कृत्तिः शरणा त इन्द्र ।

सुमहत्त इन्द्र शरणमन्तरिक्षे कृत्तिरिवेति । इयमपीतरा
कृत्तिरेतस्मादेव । सूत्रमयी । उपमार्थे वा ।

कृत्तिवासाः पिनाकहस्तो अवततधन्वा ।
कृत्तिं वसान आचर पिनाकं बिभ्रदागहि ।

इत्यपि निगमो भवति ।
श्वघ्नी कितवो भवति । स्वं हन्ति । स्वं पुनराश्रितं भवति ।

कृतं न श्वघ्नी वि चिनोति देवने ।

कृतमिव श्वघ्नी विचिनोति देवने । कितवः किं तवास्तीति शब्दानुकृतिः । कृतवान्वा । आशीर्नामकः ।
सममिति परिग्रहार्थीयम् । सर्वनामानुदात्तम् २२

मा नः समस्य दूढ्य१ः परिद्वेषसो अंहतिः ।
ऊर्मिर्न नावमा वधीत् ॥

मा नः सर्वस्य दुर्धियः पापधियः सर्वतो द्वेषसो अंहतिः ।
ऊर्मिरिव नावमावधीत् । ऊर्मिरूर्णोतेः । नौः प्रणोत्तव्या भवति । नमतेर्वा । तत्कथमनुदात्तप्रकृतिनाम स्यात् । दृष्टव्ययं तु भवति ।

उतो समस्मिन्ना शिशीहि नो वसो ।

इति सप्तम्याम् । शिशीतिर्दानकर्मा ।

उरुष्या णो अघायतः समस्मात् ।

इति पञ्चम्याम् । उरुष्यतिरकर्मकः । अथापि प्रथमा बहुवचने ।

नभन्तामन्यके समे २३

हविषा जारो अपां पिपर्ति पपुरिर्नरा ।
पिता कुटस्य चर्षणिः ॥

हविषापां जरयिता । पिपर्ति पपुरिरिति पृणातिनिगमौ वा । प्रीणातिनिगमौ वा । पिता कृतस्य कर्मणश्चायितादित्यः ।

शम्ब इति वज्रनाम । शमयतेर्वा । शातयतेर्वा ।

उग्रो यः शम्बः पुरुहूत तेन । इत्यपि निगमो भवति ।
केपयः कपूया भवन्ति । कपूयमिति । पुनाति कर्म कुत्सितम् ।
दुष्पूयं भवति २४

पृथक्प्रायन्प्रथमा देवहूतयोऽकृण्वत श्रवस्यानि दुष्टरा ।
न ये शेकुर्यज्ञियां नावमारुहमीर्मैव ते न्यविशन्त केपयः ॥

पृथक्प्रायन् । पृथक् प्रथतेः । प्रथमा देवहूतयः । ये
देवानाह्वयन्त । अकुर्वत श्रवणीयानि यशांसि । दुरनुकराण्यन्यैः
। येऽशक्नुवन् यज्ञियां नावमारोढुम् ।
अथ ये नाशक्नुवन् यज्ञियां नावमारोढुम् । ईर्मैव ते न्यविशन्त ।
इहैव ते न्यविशन्त । ऋणे हैव ते न्यविशन्त ।
अस्मिन्नेव लोक इति वा । ईर्म इति बाहुनाम । समीरिततरो
भवति ।

एता विश्वा सवना तूतुमाकृषे स्वयं सूनो सहसो यानि दधिषे ।

एतानि सर्वाणि स्थानानि तूर्णमुपाकुरुषे । स्वयं बलस्य पुत्र यानि
धत्स्व । अंसत्रमंहसस्त्राणम् । धनुर्वा । कवचं वा । कवचं
कु अंचितं भवति । कांचितं भवति । कायेऽञ्चितं भवतीति वा
२५

प्रीणीताश्वान्हितं जयाथ स्वस्तिवाहं रथमित्कृणुध्वम् ।
द्रणाहावमवतमश्मचक्रमंसत्रकोशं सिञ्चता नृपाणम् ॥

प्रीणीताश्वान्त्सुहितं जयथ । जयनं वो हितमस्तु । स्वस्तिवाहनं
रथं कुरुध्वम् । द्रोणाहावम् । द्रोणं द्रुममयं भवति । आहाव
आह्वानात् । आवह आवहनात् । अवतोऽवातितो महान्भवति ।

अश्मचक्रमशनचक्रमसनचक्रमिति वा । अंसत्रकोशम् ।
अंसत्राणि वः कोशस्थानीयानि सन्तु । कोशः कुष्णातेः ।
बिकुषितो भवति । अयमपीतरः कोश एतत्सादेव । सञ्चय
आचितमात्रो महान्भवति । सिंचत नृपाणं नरपाणम् ।
कूपकर्मणा संग्राममुपमिमीते ।
काकुदं ताल्वित्याचक्षते । जिह्वा कोकुवा । साऽस्मिन्धीयते ।
जिह्वा कोकुवा । कोकूयमाना वर्णान्नुदतीति वा । कोकूयतेर्वा
स्याच्छब्दकर्मणः । जिह्वा जोहुवा । तालु तरतेः ।
तीर्णतममङ्गम् । लततेर्वा स्याद् विपरीतात् । यथा तलम् ।
लतेत्यविपर्ययः २६

सुदेवो असि वरुण यस्य ते सप्त सिन्धवः ।
अनुक्षरन्ति काकुदं सूर्म्यं सुषिरामिव ॥

सुदेवस्त्वं कल्याणदानः । यस्य तव देव सप्त सिन्धवः
प्राणायानुक्षरन्ति काकुदम् । सूर्म्यं सुषिरामिवेति । अपि निगमो
भवति २७

सुदेवस्त्वं कल्याणदेवः । कमनीयदेवो वा भवसि वरुण ।
यस्य ते सप्तसिंधवः । सिंधुः स्रवणात् । यस्य ते सप्त स्रोतांसि
। तानि ते काकुदमनुक्षरन्ति । सूर्मिः कल्याणोर्मिः । स्रोतः
सुषिरमनु यथा । बीरिटं तैटीकिरन्तरिक्षमेवमाह पूर्वं वयतेः ।
उत्तरमिरतेः । वयांसीरन्त्यस्मिन् । भांसि वा ।
तदेतस्यामृच्युदाहरन्ति । अपि निगमो भवति २७

प्र वावृजे सुप्रया बर्हिरेषामा विश्पतीव बीरिट इयाते ।
विशामक्तोरुषसः पूर्वहूतौ वायुः पूषा स्वस्तये नियुत्वान् ॥

प्रवृज्यते सुप्रायणं बर्हिरेषाम् । एयाते सर्वस्य पातारौ वा

पालयितारौ वा ।
बीरिटमन्तरिक्षम । भियो वा भासो वा ततिः । अपि वोपमार्थे स्यात् । सर्वपती इव राजानौ । बीरिटे गणे मनुष्याणाम् । रात्र्या विवासे पूर्वस्यामभिहूतौ । वायुश्च नियुत्वात् । पूषा च स्वस्त्ययनाय । नियुत्वान्नियुतोऽस्याश्वाः । नियुतो नियमनाद्वा । नियोजनाद्वा ।
अच्छाभेराप्तुमिति शाकपूणिः ।
परीं सीमिति व्याख्यातम् ।
एनमेनामस्या अस्येत्येतेन व्याख्यातम् ।
सृणिरङ्कुशो भवति सरणात् । अङ्कुशोऽञ्चतेः । आकुचितो भवतीति वा ।

नेदी॑य॒ इत्सृ॒ण्यः॑ प॒क्वमेया॑त् । इत्यपि निगमो भवति ।

अन्तिकतममंकुशादायात् । पक्वमौषधमागच्छत्विति ।
आगच्छत्विति २८

सस्निमसश्चन्तीन यस्य वराहो गायन्ति त्वा पवित्रं पुरु त्वा किमित्ते प्रतत्तेऽग्निन्नर एकया पान्तमन्युरुर्वश्यप्सरा उतासि स इन्नियत्कदामर्त पत्नीवन्तः सुगुरसद्वृकश्चन्द्रमा अरुणो मा य इन्द्राग्नी मा नः समस्य हविषा जारः पृथक्प्रायन्प्रीणीताश्वान्सुदेवः प्रवावृजेऽष्टाविंशतिः ॥
इति निरुक्ते पूर्वषट्के पञ्चमोऽध्यायः समाप्तः ॥

## अथ षष्ठोऽध्यायः

त्वम॑ग्ने द्यु॒भि॒स्त्वमा॑शुशु॒क्षणि॒स्त्वम॒द्भ्यस्त्वमश्म॑न॒स्परि॑ ।
त्वं वने॑भ्य॒स्त्वमोष॑धीभ्य॒स्त्वं नृ॒णां नृ॑पते जायसे॒ शुचि॑ः ॥

त्वमग्ने द्युभिरहोभिः । त्वमाशुशुक्षणिः । आशु इति च शु इति च क्षिप्रनामनी भवतः । क्षणिरुत्तरः । क्षणोतेः । आशु शुचा क्षणोतीति वा । सनोतीति वा । शुक् शोचतेः । पञ्चम्यर्थे वा प्रथमा । तथा हि वाक्यसंयोगः । आ इत्याकार उपसर्गः पुरस्तात् । चिकीर्षितज उत्तरः । आशुशोचयिषुरिति । शुचिः शोचतेः । ज्वलतिकर्मणः । अयमपीतरः शुचिरेतस्मादेव । निःषिक्तमस्मात्पापकमिति नैरुक्ताः ।

इन्द्र॒ आशा॑भ्य॒स्परि॒ सर्वा॑भ्यो॒ अभ॑यं करत् ।

आशा दिशो भवन्ति । आसदनात् । आशा उपदिशो भवन्ति । अभ्यशनात् । काशिर्मुष्टिः प्रकाशनात् । मुष्टिर्मोचनाद्वा । मोषणाद्वा । मोहनाद्वा ।

इ॒मे चि॑दिन्द्र॒ रोद॑सी अ॒पा॒रे यत्सं॑गृ॒भ्णा म॑घवन्का॒शिरित्ते॑ ।

इमे चिदिन्द्र रोदसी रोधसी द्यावापृथिव्यौ । विरोधनात् । रोधः कूलं निरुणद्धि स्रोतः । कूलं रुजतेः । विपरीतात् । लोष्टोऽविपर्ययेण । अपारे दूरपारे । यत्संगृभ्णासि मघवन् । काशिस्ते महान् ।

अ॒ह॒स्तमि॑न्द्र॒ सं पि॑ण॒क्कुणा॑रुम् ।

अहस्तमिन्द्र कृत्वा संपिण्ढि परिक्वणनं मेघम् १

अ॒ला॒तृ॒णो व॒ल इ॑न्द्र व्र॒जो गोः पु॒रा हन्तो॒र्भय॑मानो॒ व्या॑र ।

सुगान्पथो अंकृणोन्निरजे गाः प्रावन्वाणीः पुरुहूतं धमन्तीः ॥

अलातृणोऽलमातर्दनो मेघः । वलो वृणोतेः । व्रजो व्रजत्यन्तरिक्षे । गोरेतस्या माध्यमिकाया वाचः । पुरा हननाद्धयमानो व्यार । सुगान्पथो अकृणोन्निरजे गाः । सुगमनान्पथो अकरोत् । निरजनाय गवाम् । प्रावन्वाणीः पुरुहूतं धमन्तीः । आपो वा वहनात् । वाचो वा वदनात् । बहुभिराहूतमुदकं भवति । धमतिर्गतिकर्मा २

उद्वृह रक्षः सहमूलमिन्द्र वृश्चा मध्यं प्रत्यग्रं शृणीहि ।
आ कीवतः सललूकं चकर्थ ब्रह्मद्विषे तपुषिं हेतिमस्य ॥

उद्धर रक्षः सहमूलमिन्द्र । मूलं मोचनाद्वा । मोषणाद्वा । मोहनाद्वा । वृश्च मध्यम् । प्रति शृणीह्यग्रम् । अग्रमागतं भवति । आ कियतो देशात् । सललूकं संलुब्धं भवति । पापकमिति नैरुक्ताः । सररुकं वा स्यात् । सर्तेरभ्यस्तात् । तपुषिस्तपतेः । हेतिर्हन्तेः ।

त्वं चिदित्था कत्पयं शयानम् ।

सुखपयसम् । सुखमस्य पयः ।
विस्रुह आपो भवन्ति । विस्रवणात् ।

वया इव रुरुहुः सप्त विस्रुहः । इत्यपि निगमो भवति ।

वीरुध ओषधयो भवन्ति । विरोहणात् ।

वीरुधः पारयिष्णवः । इत्यपि निगमो भवति ।

नक्षद्दाभम् । अश्नुवानदाभम् । अभ्यशनेन दभ्नोतीति वा ।

नक्षद्दाभं ततुरिं पर्वतेष्ठाम् । इत्यपि निगमो भवति ।

अस्कृधोयुरकृध्वायुः । कृध्विति ह्रस्वनाम । निकृत्तं भवति ।

यो अस्कृधोयुरजरः स्वर्वान् । इत्यपि निगमो भवति ।

निशृंभा निश्रथ्यहारिणः ३

आजासः पूषणं रथे निशृंभास्ते जनश्रियम् ।
देवं वहन्तु बिभ्रतः ॥

आवहन्त्वजाः पूषणं रथे । निश्रथ्यहारिणस्ते । जनश्रियं
जातश्रियम् ।
बृबदुक्थो महदुक्थः । वक्तव्यमस्मा उक्थमिति । बृबदुक्थो वा ।

बृबदुक्थं हवामहे । इत्यपि निगमो भवति ।
ऋदूदरः सोमः । मृदूदरः । मृदूदरेष्विति वा ।

ऋदूदरेण सख्या सचेय । इत्यपि निगमो भवति ।

ऋदूपे इत्युपरिष्टाद् व्याख्यास्यामः ।
पुलुकामः पुरुकामः ।

पुलुकामो हि मर्त्यः । इत्यपि निगमो भवति ।

असिन्वती असंखादन्त्यौ ।

असिन्वती बप्सती भूर्यत्तः । इत्यपि निगमो भवति ।

कपनाः कंपनाः क्रिमयो भवन्ति ।

मोषथा वृक्षं कपनेव वेधसः । इत्यपि निगमो भवति ।

भाऋजीकः प्रसिद्धभाः ।

धूमकेतुः समिधा भाऋजीकः । इत्यपि निगमो भवति ।

रुजाना नद्यो भवन्ति । रुजन्ति कूलानि ।

सं रुजानाः पिपिष इन्द्रशत्रुः । इत्यपि निगमो भवति ।

जूर्णिर्जवतेर्वा । द्रवतेर्वा । दूनोतेर्वा ।

क्षिप्ता जूर्णिर्न वक्षति । इत्यपि निगमो भवति ।
परि घ्रंसमोमना वां वयो गात् ।

पर्यगाद्वां घ्रंसमहरवनायान्नम् ४

उपलप्रक्षिणी । उपलेषु प्रक्षिणाति । उपलप्रक्षेपिणी वा ।
इन्द्र ऋषीन् पप्रच्छ । दुर्भिक्षे केन जीवितीति । तेषामेकः
प्रत्युवाच ।
शकटं शाकिनी गावो जालमस्यन्दनं वनम् ।
उदधिः पर्वतो राजा दुर्भिक्षे नव वृत्तयः ॥
इति सा निगदव्याख्याता ५

कारुरहं ततो भिषगुपलप्रक्षिणी नना ।
नानाधियो वसूयवोऽनु गा इव तस्थिमेन्द्रायेन्दो परिस्रव ॥

कारुरहमस्मि । कर्ता स्तोमानाम् । ततो भिषक् । तत इति
सन्तानानाम । पितुर्वा । पुत्रस्य वा । उपलप्रक्षिणी
सक्तुकारिका । नना नमतेः । माता वा । दुहिता वा ।
नानाधियो नानाकर्माणः । वसूयवो वसुकामाः । अन्वास्थिताः
स्मो गाव इव लोकम् । इन्द्रायेन्दो परिस्रव । इत्यध्येषणा ।

आसीन ऊर्ध्वामुपसि क्षिणाति । उपस्थे ।

प्रकलविद्वणिग्भवति । कलाश्च वेद प्रकलाश्च ।

दुर्मित्रासः प्रकलविन्मिमानाः । इत्यपि निगमो भवति ।

अभ्यर्धयज्वा । अभ्यर्धयन्यजति ।

सिषक्ति पूषा अभ्यर्धयज्वा । इत्यपि निगमो भवति ।

ईक्ष ईशिषे ।

ईक्षे हि वस्व उभयस्य राजन् । इत्यपि निगमो भवति ।

क्षोणस्य क्षयणस्य ।

महः क्षोणस्याश्विना कण्वाय । इत्यपि निगमो भवति ६

अस्मे ते बन्धुः । वयमित्यर्थः ।
अस्मे यातं नासत्या सजोषाः । अस्मानित्यर्थः ।
अस्मे समानेभिर्वृषभ पौंस्येभिः । अस्माभिरित्यर्थः ।
अस्मे प्र यन्धि मघवन्नृजीषिन् । अस्मभ्यमित्यर्थः ।
अस्मे आराच्चिद् द्वेषः सनुतर्युयोतु । अस्मदित्यर्थः ।
ऊर्व इव पप्रथे कामो अस्मे । अस्माकमित्यर्थः ।
अस्मे धत्त वसवो वसूनि । अस्मास्वित्यर्थः ।
पाथोऽन्तरिक्षम् । पथा व्याख्यातम् ।
श्येनो न दीयन्नन्वेति पाथः । इत्यपि निगमो भवति ।

उदकमपि पाथ उच्यते पानात् ।

आ चष्ट आसां पाथो नदीनाम् । इत्यपि निगमो भवति ।

अन्नमपि पाथ उच्यते पानादेव ।

देवानां पाथ उप वक्षि विद्वान् । इत्यपि निगमो भवति ।

सवीमनि प्रसवे ।

देवस्य वयं सवितुः सवीमनि । इत्यपि निगमो भवति ।

सप्रथाः सर्वतः पृथुः ।

त्वमग्ने सुप्रथा असि । इत्यपि निगमो भवति ।

विदथानि वेदनानि ।

विदथानि प्र चोदयन् । इत्यपि निगमो भवति ७

आयन्त इव सूर्यं विश्वेदिन्द्रस्य भक्षत ।
वसूनि जाते जनमान ओजसा प्रति भागं न दीधिम ॥

समाश्रिताः सूर्यमुपतिष्ठन्ते । अपि वोपमार्थे स्यात् ।
सूर्यमिवेन्द्रमुपतिष्ठन्त इति । सर्वाणीन्द्रस्य धनानि विभक्षमाणाः
। स यथा धनानि विभजति जाते च जनिष्यमाणे च । तं वयं
भागमनुध्यायाम । ओजसा बलेन । ओज ओजतेर्वा ।
उब्जतेर्वा ।
आशीराश्रयणाद्वा । आश्रपणाद्वा । अथेयमितराशीराशास्तेः ।

इन्द्राय गाव आशिरम् । इत्यपि निगमो भवति ।
सा मे सत्याशीर्देवेषु । इति च ।
यदा ते मर्तो अनु भोगमानळादिद्ग्रसिष्ठ ओषधीरजीगः ।

यदा ते मर्तो भोगमन्वापदथ ग्रसितृतम ओषधीरगारीः ।
जिगर्तिर्गिरतिकर्मा वा । गृणातिकर्मा वा । गृह्णातिकर्मा वा ।

मूरा अमूर न वयं चिकित्वो महित्वमग्ने त्वमङ्ग वित्से ।

मूढा वयं स्मः । अमूढस्त्वमसि । न वयं विद्मो महित्वमग्ने ।
त्वं तु वेत्थ ।
शशमानः शंसमानः ।

यो वां यज्ञैः शशमानो ह दाशति । इत्यपि निगमो भवति ।

दे॒वो दे॒वाच्या॑ कृ॒पा ।

देवो देवान्प्रत्यक्तया कृपा । कृप्कृपतेर्वा । कल्पतेर्वा । ८

अश्र॑वं॒ हि भू॑रि॒दाव॑त्तरा वां॒ विजा॑मातुरु॒त वा॑ घा स्या॒लात् ।
अथा॒ सोम॑स्य॒ प्रय॑ती यु॒वभ्या॒मिन्द्रा॑ग्नी॒ स्तोमं॑ जनया॒मि नव्य॑म् ॥

अश्रौषं हि बहुदातृतरौ वाम् । विजामातुः । असुसमाप्ताज्जामातुः । विजामातेति शश्वद्दाक्षिणाजाः क्रीतापतिमाचक्षते । असुसमाप्त इव वरोऽभिप्रेतः । जामाता । जा अपत्यम् । तन्निर्माता । उत वा घा स्यालात् । अपि च स्यालात् । स्याल आसन्नः संयोगेनेति नैदानाः । स्याल्लाजानावपतीति वा । लाजा लाजतेः । स्यं शूर्पं स्यतेः । शूर्पमशनपवनम् । शृणातेर्वा । अथ सोमस्य प्रदानेन युवाभ्यामिन्द्राग्नी स्तोमं जनयामि नव्यं नवतरम् ।
ओमास इत्युपरिष्टाद्व्याख्यास्यामः ९

सो॒मानं॒ स्वर॑णं कृणु॒हि ब्र॑ह्मणस्पते ।
क॒क्षीव॑न्तं॒ य औ॑शि॒जः ॥

सोमानां सोतारं प्रकाशनवन्तं कुरु ब्रह्मणस्पते कक्षीवन्तमिव य औशिजः । कक्षीवान् कक्ष्यावान् । औशिज उशिजः पुत्रः । उशिग्वष्टेः कान्तिकर्मणः । अपि त्वयं मनुष्यकक्ष एवाभिप्रेतः स्यात् । तं सोमानां सोतारं मां प्रकाशनवन्तं कुरु ब्रह्मणस्पते १०

इन्द्रा॑सोमा॒ सम॒घशं॑सम॒भ्य१॒॑ घं तपु॑र्ययस्तु च॒रुर॑ग्नि॒वाँ इ॑व ।
ब्र॒ह्म॒द्विषे॑ क्र॒व्यादे॑ घो॒रच॑क्षसे॒ द्वेषो॑ धत्तमनवा॒यं कि॑मी॒दिने॑ ॥

इन्द्रासोमावघस्य शंसितारम् । अघं हन्तेः । निर्ह्रसितोपसर्गः । आहन्तीति । तपुस्तपतेः । चरुर्मृच्चयो भवति । चरतेर्वा ।

समुच्चरन्त्यस्मादापः । ब्रह्मद्विषे क्रव्यमदते । घोरख्यानाय । क्रव्यं विकृत्ताज्जायत इति नैरुक्ताः । द्वेषो धत्तम् । अनवायमनवयवम् । यदन्ये न व्यवेयुः । अद्वेषस इति वा । किमीदिने । किमिदानीमिति चरते । किमिदं किमिदमिति वा । पिशुनाय चरते । पिशुनः पिंशतेः । विपिंशतीति ११

कृणुष्व पाजः प्रसितिं न पृथ्वीं याहि राजेवामवाँ इभेन । तृष्वीमनु प्रसितिं द्रूणानोऽस्तासि विध्य रक्षसस्तपिष्ठैः ॥

कुरुष्व पाजः । पाजः पालनात् । प्रसितिमिव पृथ्वीम् । प्रसितिः प्रसयनात् । तंतुर्वा । जालं वा । याहि राजेव । अमात्यवान् । अभ्यमनवान् । स्ववान्वा । इराभृता गणेन गतभयेन । हस्तिनेति वा । तृष्व्यानु प्रसित्या द्रूणानः । तृष्वीति क्षिप्रनाम । तरतेर्वा । त्वरतेर्वा । असितासि । विध्य रक्षसः । तपिष्ठैः । तप्ततमैः । तृप्ततमैः । प्रपिष्ठतमैरिति वा ।

यस्ते गर्भममीवा दुर्णामा योनिमाशये ।

अमीवाभ्यमनेन व्याख्यातः । दुर्णामा क्रिमिर्भवति पापनामा । क्रिमिः क्रव्ये मेद्यति । क्रमतेर्वा स्यात्सरणकर्मणः । क्रामतेर्वा ।

अति क्रामन्तो दुरितानि विश्वा ।

अतिक्रममाणा दुर्गतिगमनानि सर्वाणि ।
अप्वा यदेनया विद्धोऽपवीयते । व्याधिर्वा । भयं वा ।

अप्वे परेहि । इत्यपि निगमो भवति ।

अमतिरमामयी । मतिरात्ममयी ।

ऊर्ध्वा यस्यामतिर्भा अदिद्युतत् सवीमनि ।

इत्यपि निगमो भवति ।
श्रुष्टीति क्षिप्रनाम । आशु अष्टीति १२

ताँ अध्वर उशतो यक्ष्यग्ने श्रुष्टी भगं नासत्या पुरंन्धिम् ।

तानध्वरे यज्ञे । उशतः कामयमानान् । यजाग्ने । श्रुष्टी भगम् । नासत्यौ चाश्विनौ । सत्यावेव नासत्यावित्यौर्णवाभः । सत्यस्य प्रणेताराविल्याग्रायणः । नासिकाप्रभवौ बभूवतुरिति वा । पुरन्धिर्बहुधीः । तत्कः पुरन्धिः । भगः पुरस्तात्तस्यान्वादेश इत्येकम् । इन्द्र इत्यपरम् । स बहुकर्मतमः । पुरां च दारयितृतमः । वरुण इत्यपरम् । तं प्रज्ञया स्तौति ।

इमामू नु कवितमस्य मायाम् । इत्यपि निगमो भवति ।

रुशदिति वर्णनाम । रोचतेर्ज्वलतिकर्मणः ।

समिद्धस्य रुशददर्शि पाजः । इत्यपि निगमो भवति १३

अस्ति हि वः सजात्यं रिशादसो देवासो अस्त्याप्यम् ।

अस्ति हि वः । समानजातिता रेशयदारिणो देवाः । अस्त्याप्यम् । आप्यमाप्नोतेः ।
सुदत्रः कल्याणदानः ।

त्वष्टा सुदत्रो विदधातु रायः । इत्यपि निगमो भवति ।

सुविदत्रः कल्याणविद्यः ।

आग्ने याहि सुविदत्रेभिरर्वाङ् । इत्यपि निगमो भवति ।

आनुषगिति नामानुपूर्वस्य । अनुषक्तं भवति ।

स्तृणन्ति बर्हिरानुषक् । इत्यपि निगमो भवति ।

तुर्वणिस्तूर्णवनिः ।

स तुर्वणिर्महाँ अरेणु पौंस्ये । इत्यपि निगमो भवति ।

निर्वणा देवो भवति । गीर्भिरेनं वनयन्ति ।

जुष्टं गिर्वणसे बृहत् । इत्यपि निगमो भवति १४

असूर्ते सूर्ते रजसि निषत्ते ये भूतानि समकृण्वन्निमानि ।

असुसमीरिताः सुसमीरिते वातसमीरिताः । माध्यमका देवगणाः । ते रसेन पृथिवीं तर्पयन्तः । भूतानि च कुर्वन्ति । त आयजन्त । इत्यतिक्रान्तं प्रतिवचनम् ।

अम्यक्सा त इन्द्र ऋषिः । अमाक्तेति वा । अभ्यक्तेति ।
यादृश्मिन्धायि तमपस्यया विदत् ।

यादृशेऽधायि तमपस्ययाविदत् ।

उस्रः पितेव जारयायि यज्ञैः ।

उस्र इव गोपिताजायि यज्ञैः १५

प्र वोऽच्छा जुजुषाणासो अस्थुरभूत विश्वे अग्रियोत वाजाः ।

प्रास्थुर्वो जोषयमाणा अभवत सर्वे । अग्रगमनेनेति वा ।
अग्रसंपादिन इति वा ।
अपि वाग्रमित्येतदनर्थकमुपबंधमाददीत ।

अद्धीदिन्द्र प्रस्थितेमा हवींषि चनो दधिष्व पचतोत सोमम् ।

अद्धीन्द्र प्रस्थितानीमानि हवींषि चनो दधिष्व । चन इत्यन्ननाम

। पचतिर्नामीभूतः ।

तं मेदस्तः प्रति पचताग्रभीष्टाम् ।

इत्यपि निगमो भवति ।
अपि वा मेदसश्च पशोश्च । सात्त्वं द्विवचनं स्यात् । यत्र ह्येकवचनार्थः प्रसिद्धं तद्भवति ।

पुरोळा अग्ने पचतः । इति यथा ।

शुरुध आपो भवन्ति । शुचं संरुन्धन्ति ।

ऋतस्य हि शुरुधः सन्ति पूर्वीः । इत्यपि निगमो भवति ।
अमिनोऽमितमात्रो महान्भवति । अभ्यमितो वा ।

अमिनः सहोभिः । इत्यपि निगमो भवति ।

जज्झतीरापो भवन्ति । शब्दकारिण्यः ।

मरुतो जज्झतीरिव । इत्यपि निगमो भवति ।

अप्रतिष्कुतः । अप्रतिस्कृतः । अप्रतिस्खलितो वा ।

अस्मभ्यमप्रतिष्कुतः । इत्यपि निगमो भवति ।

शाशदानः शाशाद्यमानः ।

प्र स्वां मतिमतिरच्छाशदानः । इत्यपि निगमो भवति १६

सृप्रः सर्पणात् । इदमपीतरत् सृप्रमेतस्मादेव । सर्पिर्वा । तैलं वा ।

सृप्रकरस्नमूतये । इत्यपि निगमो भवति ।

करस्नौ बाहू । कर्मणां प्रस्नातारौ ।

सुशिप्रमेतेन व्याख्यातम् ।

वाजे सुशिप्र गोमति । इत्यपि निगमो भवति ।

शिप्रे हनू नासिके वा । हनुर्हन्तेः । नासिका नसतेः ।

विष्यस्व शिप्रे वि सृजस्व धेने । इत्यपि निगमो भवति ।

धेना दधातेः ।
रंसु रमणात् ।

स चित्रेण चिकिते रंसु भासा । इत्यपि निगमो भवति ।

द्विबर्हा द्वयोः स्थानयोः परिवृढः । मध्यमे च स्थान उत्तमे च ।

उत द्विबर्हा अमिनः सहोभिः । इत्यपि निगमो भवति ।

अक्र आक्रमणात् ।

अक्रो न बभ्रिः समिथे महीनाम् । इत्यपि निगमो भवति ।

उराण उरु कुर्वाणः ।

दूत ईयसे प्रदिव उराणः । इत्यपि निगमो भवति ।

स्तिया आपो भवन्ति । स्त्यायनात् ।

वृषा सिन्धूनां वृषभः स्तियानाम् । इत्यपि निगमो भवति ।

स्तिपा स्तियापालनः । उपस्थितान् पालयतीति ।

स नः स्तिपा उत भवा तनूपाः । इत्यपि निगमो भवति ।

जबारु जवमानरोहि । जरमाणरोहि । गरमाणरोहीति वा ।

अग्रे रुप आरुपितं जबारु । इत्यपि निगमो भवति ।

जरूथं गरूथं गृणातेः ।

जरूथं हन्यद्यक्षि राये पुरंन्धिम् । इत्यपि निगमो भवति ।

कुलिश इति वज्रनाम । कूलशातनो भवति ।

स्कन्धांसीव कुलिशेना विवृक्णाहिः शयत उपपृक्पृथिव्याः ।

स्कन्धो वृक्षस्य समास्कन्नो भवति । अयमपीतरःस्कन्ध
एतस्मादेव । आस्कन्नं काये । अहिः शयत उपपर्चनः पृथिव्याः ।
तुंजस्तुंजतेर्दानकर्मणः १७
तुञ्जेतुञ्जे य उत्तरे स्तोमा इन्द्रस्य वज्रिणः ।
न विन्धे अस्य सुष्टुतिम् ॥

दाने दाने य उत्तरे स्तोमा इन्द्रस्य वज्रिणो नास्य तैर्विन्दामि समाप्तिं
स्तुतेः ।
बर्हणा परिबर्हणा ।

बृहच्छ्रवा असुरो बर्हणा कृतः । इत्यपि निगमो भवति १८

यो अस्मै घ्रंस उत वा य ऊधनि सोमं सुनोति भवति द्युमाँ अह ।
अपाप शक्रस्ततनुष्टिमूहति तनूशुभ्रं मघवा यः कवासखः ॥

घ्रंस इत्यहर्नाम । ग्रस्यन्तेऽस्मिन्नसाः ।
गोरूध उद्धततरं भवति । उपोन्नद्धमिति वा ।
स्नेहानुप्रदानसामान्याद्रात्रिरप्यूध उच्यते । स योऽस्मा अहन्यपि
वा रात्रौ सोमं सुनोति भवत्यह द्योतनवान् ।
अपोहत्यपोहति शक्रः । ततनिषुं
धर्मसन्तानादपेतमलंकरिष्णुमयज्वानम् । तनूशुभ्रं तनूशोभयितारम्
। मघवा यः । कवासखो यस्य कपूयाः सखायः ।

न्याविध्यदिलीबिशस्य दृळ्हा वि शृङ्गिणमभिनच्छुष्णमिन्द्रः ।

निरविध्यदिलाबिलशयस्य दृढानि । व्यभिनच्छृङ्गिणं शुष्णमिन्द्रः
१९

अस्मा इदु प्र भरा तूतुजानो वृत्राय वज्रमीशानः कियेधाः ।
गोर्न पर्व वि रदा तिरश्चेष्यन्नर्णांस्यपां चरध्यै ॥

अस्मै प्रहर । तूर्णं त्वरमाणः । वृत्राय वज्रमीशानः । कियेधाः
कियद्धा इति वा । क्रममाणधा इति वा । गोरिव पर्वाणि विरद
मेघस्य । इष्यन्नर्णांसि । अपां चरणाय ।
भृमिर्भ्राम्यतेः ।

भृमिरस्यृषिकृन्मर्त्यानाम् । इत्यपि निगमो भवति ।

विष्पितो विप्राप्तः ।

पारं नो अस्य विष्पितस्य पर्षन् । इत्यपि निगमो भवति २०

तन्नस्तुरीपमद्भुतं पुरु वारं पुरु त्मना ।
त्वष्टा पोषाय वि ष्यतु राये नाभा नो अस्मयुः ॥

तन्नः । तूर्णापि । महत् । संभृतम् । आत्मना । त्वष्टा
धनस्य पोषाय विष्यतु । इत्यस्मयुः । अस्मान् कामयमानः ।
रास्पिनो रास्पी । रपतेर्वा । रसतेर्वा ।

रास्पिनस्यायोः । इत्यपि निगमो भवति ।

ऋञ्जतिः प्रसाधनकर्मा ।

आ व ऋञ्जस ऊर्जां व्युष्टिषु । इत्यपि निगमो भवति ।

ऋजुरित्यप्यस्य भवति ।

ऋृजुनीती नो वरुणः । इत्यपि निगमो भवति ।

प्रतद्वसू प्राप्तवसू ।

हरी इन्द्र प्रतद्वसू अभि स्वर । इत्यपि निगमो भवति २१

हिनोता नो अध्वरं देवयज्या हिनोत ब्रह्म सनये धनानाम् ।
ऋृतस्य योगे वि ष्यध्वमूधः श्रुष्टीवरीर्भूतनास्मभ्यमापः ॥

प्रहिणुत नोऽध्वरं देवयज्यायै । प्रहिणुत ब्रह्म धनस्य सनयाय ।
ऋृतस्य योगे ।
यज्ञस्य योगे । याज्ञे शकट इति वा । शकटं शकृदितं भवति ।
शनकैस्तकतीति वा । शब्देन तकतीति वा । सुखवतीः
श्रुष्टीवरीर्भूतनास्मभ्यमापः । सुखवत्यो भवतास्मभ्यमापः ।

चोष्कूयमाण इन्द्र भूरि वामम् ।

ददिन्द्र बहुवननीयम् ।

एधमानद्विळुभयस्य राजा चोष्कूयते विश इन्द्रो मनुष्यान् ।

व्युदस्यति । एधमानानहर्द्वेष्ट्यसुन्वतः । सुन्वतोऽभ्यादधाति ।
उभयस्य राजा । दिव्यस्य च पार्थिवस्य च । चोष्कूयमाण इति
चोष्कूयतेश्चर्करीतवृत्तम् ।
सुमत्स्वयमित्यर्थः ।

उप प्रागात्सुमन्मेधायि मन्म ।

उपप्रैतु मां स्वयं यन्मे मनोऽध्यायि यज्ञेन । इत्याश्वमेधिको मन्त्रः ।
दिविष्टिषु दिव एषणेषु ।

स्थूरं राधः शताश्वं कुरुङ्गस्य दिविष्टिषु ।

स्थूरः । समाश्रितमात्रो महान्भवति । अणुरनु स्थवीयांसम् ।
उपसर्गो लुप्तनामकरणः । यथा संप्रति । कुरुङ्गो राजा बभूव ।
कुरुगमनाद्वा । कुलगमनाद्वा । कुरुः कृन्ततेः । क्रूरमित्यप्यस्य
भवति । कुलं कुष्णातेः । विकुषितं भवति ।
दूतो व्याख्यातः ।
जिन्वतिः प्रीतिकर्मा ।

भूमिं पुर्जन्या जिन्वन्ति दिवं जिन्वन्त्युग्नयः ।
इत्यपि निगमो भवति २२

अमत्रोऽमात्रो महान्भवति । अभ्यमितो वा ।

महाँ अमत्रो वृजने विरुप्शि । इत्यपि निगमो भवति ।
स्तवै वुज्रयृचीषमः । स्तूयते वज्रयृचा समः ।

अनर्शरातिमनश्लीलदानम् । अश्लीलं पापकम् ।
अश्रिमत् । विषमम् ।

अनर्शरातिं वसुदामुप स्तुहि । इत्यपि निगमो भवति ।

अनर्वा अप्रत्यृतोऽन्यस्मिन् ।

अनुर्वाणं वृषुभं मुन्द्रजिह्वं बृहुस्पतिं वर्धया नव्यमुर्कैः ।

अनर्वमप्रत्यृतमन्यस्मिन् । वृषभम् । मन्द्रजिह्वं मन्दनजिह्वं ।
मोदनजिह्वमिति वा । बृहस्पतिं वर्धय नव्यमर्कैः । अर्चनीयैः
स्तोमैः ।
असामि सामिप्रतिषिद्धम् । सामि स्यतेः ।

असाम्योजो बिभृथा सुदानवः ।

असुसमाप्तं बलं बिभृत कल्याणदानाः २३

मा त्वा सोमस्य गल्दया सदा याचन्नहं गिरा ।
भूर्णिं मृगं न सवनेषु चुक्रुधं क ईशानं न याचिषत् ॥

मा चुक्रुधं त्वां सोमस्य गालनेन सदा याचन्नहम् । गिरा गीत्या स्तुत्या । भूर्णिमिव मृगम् । न सवनेषु चुक्रुधम् । क ईशानं न याचिष्यत इति । गल्दा धमनयो भवन्ति । गलनमासु धीयते ।

आ त्वा विशन्त्विन्दव आ गल्दा धमनीनाम् ।
नानाविभक्तीत्येते भवतः । आगलना धमनीनामित्यत्रार्थः २४

न पापासो मनामहे नारायासो न जल्हवः ।

न पापा मन्यामहे । नाधनाः । न ज्वलनेन हीनाः ।
अस्त्यस्मासु ब्रह्मचर्यमध्ययनं तपो दानकर्मेत्यृषिरवोचत् ।
बकुरो भास्करः । भयंकरः । भासमानो द्रवतीति वा २५

यवं वृकेणाश्विना वपन्तेषं दुहन्ता मनुषाय दस्रा ।
अभि दस्युं बकुरेणा धमन्तोरु ज्योतिश्चक्रथुरार्याय ॥

यवमिव वृकेणाश्विनौ निवपन्तौ । वृको लाङ्गलं भवति ।
विकर्तनात् ।
लाङ्गलं लगतेः । लाङ्गूलवद्वा । लाङ्गूलं लगतेः । लंगतेः । लंबतेर्वा । अन्नं दुहन्तौ मनुष्याय दर्शनीयौ । अभिधमन्तौ ।
दस्युं बकुरेण ज्योतिषा वोदकेन वा । अर्य ईश्वरपुत्रः ।
बेकनाटाः खलु कुसीदिनो भवन्ति । द्विगुणकारिणो वा ।
द्विगुणदायिनो वा । द्विगुणं कामयन्त इति वा ।

इन्द्रो विश्वान्बेकनाटाँ अहर्दृश उत क्रत्वा पणीँरभि ।

इन्द्रो यः सर्वान् बेकनाटान् । अहर्दृशः सूर्यदृशः । य

इमान्यहानि पश्यन्ति न पराणीति वा । अभिभवति कर्मणा ।
पणींश्च वणिजः २६

जीवान्नो अभि धेतनादित्यासः पुरा हथात् ।
कद्ध स्थ हवनश्रुतः ॥

जीवतो नोऽभिधावतादित्याः पुरा हननात् । क्व नु स्थ ह्वानश्रुत इति ।
मत्स्यानां जालमापन्नानामेतदार्षं वेदयन्ते । मत्स्या मधा उदके स्यन्दन्ते । माद्यन्तेऽन्योन्यं भक्षणायेति वा । जालं जलचरं भवति । जलेभवं वा । जलेशयं वा ।
अंहुरोंऽहस्वान् । अंहूरणमित्यप्यस्य भवति ।

कृणवन्नंहूरणादुरु । इत्यपि निगमो भवति ।
सप्त मर्यादाः कवयस्ततक्षुस्तासामेकामिदभ्यंहुरो गात् ।

सप्त मर्यादाः कवयश्चक्रुः । तासामेकामप्यभिगच्छन्नंहस्वान्भवति । स्तेयं तल्पारोहणं ब्रह्महत्यां भ्रूणहत्यां सुरापानं दुष्कृतस्य कर्मणः पुनः पुनः सेवां पातकेऽनृतोद्यमिति ।
बत इति निपातः । खेदानुकम्पयोः २७

बतो बतासि यम नैव ते मनो हृदयं चाविदाम ।
अन्या किल त्वां कक्ष्येव युक्तं परिष्वजाते लिबुजेव वृक्षम् ॥

बतो बलादतीतो भवति । दुर्बलो बतासि यम । नैव त मनो हृदयं च विजानामि । अन्या किल त्वां परिष्वंक्ष्यते कक्ष्येव युक्तं लिबुजेव वृक्षम् । लिबुजा व्रततिर्भवति । लीयते विभजन्तीति । व्रततिर्वरणाच्च । सयनाच्च । ततनाच्च ।
वाताप्यमुदकं भवति । वात एतदाप्याययति ।

पुनानो वाताप्यं विश्वश्चंन्द्रम् । इत्यपि निगमो भवति ।
वने न वायो न्यंधायि चाकन् ।

वन इव । वायो वेः पुत्रः । चायन्निति वा । कामयमान इति वा । वेति च य इति च चकार शाकल्यः । उदात्तं त्वेवमाख्यातमभविष्यत् । असुसमाप्तश्चार्थः । रथर्यतीति सिद्धस्तत्प्रेप्सुः । रथं कामयत इति वा ।

एष देवो रंथर्यति । इत्यपि निगमो भवति २८

धेनुं न इषं पिन्वतमसंक्राम् । असंक्रमणीम् ।

आधव आधवनात् ।

मतीनां च साधनं विप्राणां चाधवम् । इत्यपि निगमो भवति ।

अनवब्रवोऽनवक्षिप्तवचनः ।

विजेषकृदिन्द्रं इवानवब्रवः । इत्यपि निगमो भवति २९

अरायि काणे विकंटे गिरिं गंच्छ सदान्वे ।
शिरिम्बिंठस्य सत्त्वंभिस्तेभिंष्ट्वा चातयामसि ॥

अदायिनि काणे विकटे । काणोऽविक्रान्तदर्शन इत्यौपमन्यवः । कणतेर्वा स्यादणूभावकर्मणः । कणतिः शब्दाणूभावे भाष्यते । अनुकणतीति । मात्राणूभावात्कणः । दर्शनाणूभावात्काणः । विकटो विक्रान्तगतिरित्यौपमन्यवः । कुटतेर्वा स्यात् विपरीतस्य विकुटितो भवति । गिरिं गच्छ । सदानोनुवे शब्दकारिके । शिरिम्बिठस्य सत्त्वभिः । शिरिम्बिठो मेघः । शीर्यते बिठे । बिठमन्तरिक्षं बिठं बीरिटेन व्याख्यातम् । तस्य सत्त्वैरुदकैरिति स्यात् । तैष्ट्वा चातयामः । अपि वा शिरिम्बिठो भारद्वाजः

कालकर्णोपेतः । अलक्ष्मीर्निर्णाशयाञ्चकार । तस्य सत्त्वैः कर्मभिरिति स्यात् । तैष्वा चातयामः । चातयतिर्नाशने । पराशरः पराशीर्णस्य वसिष्ठस्य स्थविरस्य जज्ञे ।

पराशरः शतयातुर्वसिष्ठः । इत्यपि निगमो भवति ।

इन्द्रोऽपि पराशर उच्यते । परा शातयिता यातूनाम् ।

इन्द्रो यातूनामभवत्पराशरः । इत्यपि निगमो भवति । क्रिविर्दती विकर्तनदन्ती ।

यत्रा वो दिद्युद्रदति क्रिविर्दती । इत्यपि निगमो भवति ।

करूलती कृत्तदती । अपि वा देवं कञ्चित्कृत्तदन्तं दृष्ट्वैवमवक्ष्यत ३०

वामं वामं त आदुरे देवो ददात्वर्यमा ।
वामं पूषा वामं भगो वामं देवः करूलती ॥

वामं वननीयं भवति । आदुरिरादरणात् । तत्कः करूलती । भगः पुरस्तात्तस्यान्वादेश इत्येकम् । पूषेत्यपरम् । सोऽदन्तकः । अदन्तकः पूषा । इति च ब्राह्मणम् ।

दनो विश इन्द्र मृध्रवाचः ।

दानमनसो नो मनुष्यानिन्द्र मृदुवाचः कुरु ।

अवीरामिव मामयं शरारुरभि मन्यते ।

अबलामिव मामयं बालोऽभिमन्यते संशिशारिषुः । इदंयुरिदं कामयमानः । अथापि तद्वदर्थे भाष्यते । वसूयुरिन्द्रो वसुमानित्यत्रार्थः ।

अश्वयुर्गव्यू रथयुर्वसूयुः इन्द्रः । इत्यपि निगमो भवति ३१

किं ते कृण्वन्ति कीकटेषु गावो नाशिरं दुह्रे न तपन्ति घर्मम् ।
आ नो भर प्रमगन्दस्य वेदो नैचाशाखं मघवन्रन्धया नः ॥

किं ते कुर्वन्ति कीकटेषु गावः । कीकटा नाम देशोऽनार्यनिवासः । कीकटाः किंकृताः । किं क्रियाभिरिति प्रेप्सा वा । नैव चाशिरं दुह्रे । न तपन्ति घर्मं हर्म्यम् । आहर नः प्रमगन्दस्य धनानि । मगन्दः कुसीदी । माङ्गदो मामागमिष्यतीति च ददाति । तदपत्यं प्रमगन्दः । अत्यन्तकुसीदिकुलीनः । प्रमदको वा योऽयमेवास्ति लोको न पर इति प्रेप्सुः । पण्डको वा । पण्डकः पण्डगः प्रार्दको वा प्रार्दयत्याण्डौ । आण्डावाणी इव व्रीडयति । तत् स्थं नैचाशाखं नीचाशाखो नीचैः शाखः । शाखाः शक्नोतेः । आणिररणात् । तन्नो मघवन्रन्धयेति । रध्यतिर्वशगमने ।
बुन्द इषुर्भवति । भिन्दो वा । भयदो वा । भासमानो द्रवतीति वा ३२

तुविक्षं ते सुकृतं सूमयं धनुः साधुर्बुन्दो हिरण्ययः ।
उभा ते बाहू रण्या सुसंस्कृत ऋदूपे चिदृदूवृधा ॥

तुविक्षं बहुविक्षेपं महाविक्षेपं वा ते सुकृतं सूमयं सुसुखं धनुः । साधयिता ते बुन्दो हिरण्मयः । उभौ ते बाहू रमणीयौ सांग्राम्यौ वा । ऋदूपे अर्दनपातिनौ । गमनपातिनौ शब्दपातिनौ दूरपातिनौ वा । मर्मण्यर्दनवेधिनौ । गमनवेधिनौ शब्दवेधिनौ दूरवेधिनौ वा ३३

निराविध्यद्गिरिभ्य आ धारयत्पक्वमोदनम् ।
इन्द्रो बुन्दं स्वाततम् ॥

निरविध्यद्गिरिभ्य आधारयत्पक्वम् । ओदनमुदकदानं मेघम् ।
इन्द्रो बुन्दं स्वाततम् ।
वृन्दं बुन्देन व्याख्यातम् । वृन्दारकश्च ३४

अयं यो होता किरु स यमस्य कमप्यूहे यत्समञ्जन्ति देवाः ।
अहरहर्जायते मासि मास्यथा देवा दधिरे हव्यवाहम् ॥

अयं यो होता कर्ता स यमस्य । कमप्यूहे अन्नमभिवहति
यत्समश्नुवन्ति देवाः । अहरहर्जायते । मासे मासे ।
अर्धमासेऽर्धमासे वा । अथ देवा निदधिरे हव्यवाहम् ।
उल्बमूर्णोतेः । वृणोतेर्वा ।

महत्तदुल्बं स्थविरं तदासीत् । इत्यपि निगमो भवति ।

ऋबीसमपगतभासम् । अपहृतभासम् । अन्तर्हितभासम् ।
गतभासं वा ३५

हिमेनाग्निं घ्रंसमवारयेथां पितुमतीमूर्जमस्मा अधत्तम् ।
ऋबीसे अत्रिमश्विनावनीतमुन्निन्यथुः सर्वगणं स्वस्ति ॥

हिमेनोदकेन ग्रीष्मान्तेऽग्निं घ्रंसमहरवारयेथाम् । अन्नवतीं चास्मा
ऊर्जमधत्तमग्नये । योऽयमृबीसे
पृथिव्यामग्निरन्तरौषधिवनस्पतिष्वप्सु तमुन्निन्यथुः । सर्वगणं
सर्वनामानं । गणो गणनात् । गुणश्च । यद्वृष्ट ओषधय उद्यन्ति
प्राणिनश्च पृथिव्यां तदश्विनो रूपं तेनैनौ स्तौति स्तौति ३६

त्वमग्नेऽलातृण उद्वहाजास उपलप्रक्षिणीकारुरहमस्मे ते श्रायन्त
इवाश्रवं हि सोमानं स्वरणमिन्द्रा सोमा कृणुष्वपाजस्तां अध्वरेऽस्ति
हिवोऽसूर्ते प्रवोच्छा सृप्रस्तुञ्जे तुञ्जे यो अस्मा अस्मा इदु तन्नस्तुरीपं

हिनोतानोमत्रो मात्वा न पापासो यवं वृकेण जीवान्नो बतो बतासि धेनुन्नोऽरायि काणे वामं वामं किं ते तुविद्धं ते निराविध्यदयं यो होता हिमेनाग्निं षट्त्रिंशत् ॥

इति निरुक्ते पूर्वषट्के षष्ठोऽध्यायः समाप्तः

इति नैगमं काण्डं पूर्वार्धञ्च समाप्तम्

# अथोत्तरषट्कं प्रारभ्यते

# अथ सप्तमोऽध्यायः

ॐ ॥ अथातो दैवतम् । तद्यानि नामानि प्राधान्यस्तुतीनां देवतानां तद्दैवतमित्याचक्षते । सैषा देवतोपपरीक्षा । यत्काम ऋषिर्यस्यां देवतायामार्थपत्यमिच्छन्स्तुतिं प्रयुङ्क्ते तद्दैवतः स मन्त्रो भवति । तास्त्रिविधा ऋचः । परोक्षकृताः । प्रत्यक्षकृताः । आध्यात्मिक्यश्च । तत्र परोक्षकृताः सर्वाभिर्नामविभक्तिभिर्युज्यन्ते । प्रथमपुरुषैश्चाख्यातस्य १

इन्द्रो दिव इन्द्र ईशे पृथिव्याः ।
इन्द्रमिद् गाथिनो बृहत् ।
इन्द्रेणैते तृत्सवो वेविषाणाः ।
इन्द्राय साम गायत ।
नेन्द्रादृते पवते धाम किं चन ।
इन्द्रस्य नु वीर्याणि प्र वोचम् ।

इन्द्रे कामा अयंसत । इति ।
अथ प्रत्यक्षकृता मध्यमपुरुषयोगाः । त्वमिति चैतेन सर्वनाम्ना ।

त्वमिन्द्र बलादधि ।
वि न इन्द्र मृधो जहि । इति

अथापि प्रत्यक्षकृताः स्तोतारो भवन्ति । परोक्षकृतानि स्तोतव्यानि ।

मा चिदन्यद्वि शंसत ।
कण्वा अभि प्र गायत ।
उप प्रेत कुशिकाश्चेतयध्वम् । इति ।

अथाध्यात्मिक्य उत्तमपुरुषयोगाः । अहमिति चैतेन सर्वनाम्ना ।

यथैतदिन्द्रो वैकुण्ठः । लबसूक्तम् । वागाम्भृणीयमिति २

परोक्षकृताः प्रत्यक्षकृताश्च मन्त्रा भूयिष्ठाः । अल्पश आध्यात्मिकाः ।
अथापि स्तुतिरेव भवति नाशीर्वादः ।

इन्द्रस्य नु वीर्याणि प्र वोचम् । इति । यथैतस्मिन्त्सूक्ते ।

अथाप्याशीरेव न स्तुतिः ।
सुचक्षा अहमक्षीभ्यां भूयासम् । सुवर्चा मुखेन । सुश्रुत्कर्णाभ्यां भूयासम् । इति ।
तदेतद्बहुलमाध्वर्यवे याज्ञेषु च मन्त्रेषु ।
अथापि शपथाभिशापौ ।

अद्या मुरीय यदि यातुधानो अस्मि ।
अधा स वीरैर्दशभिर्वि यूयाः । इति ।

अथापि कस्यचिद्भावस्याचिख्यासा ।

न मृत्युरासीदमृतं न तर्हि ।
तम आसीत्तमसा गूळ्हमग्रे ।

अथापि परिदेवना कस्माच्चिद्भावात् ।

सुदेवो अद्य प्रपतेदनावृत् ।
न वि जानामि यदि वेदमस्मि । इति ।

अथापि निन्दाप्रशंसे ।

केवलाघो भवति केवलादी ।
भोजस्येदं पुष्करिणीव वेश्म ।

एवमक्षसूक्ते द्यूतनिन्दा च कृषिप्रशंसा च ।

एवमुच्चावचैरभिप्रायैर्ऋषीणां मन्त्रदृष्टयो भवन्ति ३

तद्येऽनादिष्टदेवता मन्त्रास्तेषु देवतोपपरीक्षा । यद्देवतः स यज्ञो वा यज्ञाङ्गं वा तद्देवता भवन्ति । अथान्यत्र यज्ञात्प्राजापत्या इति याज्ञिकाः । नाराशंसा इति नैरुक्ताः । अपि वा सा कामदेवता स्यात् । प्रायोदेवता वा । अस्ति ह्याचारो बहुलं लोके । देवदेवत्यमतिथिदेवत्यं पितृदेवत्यम् । याज्ञदैवतो मन्त्र इति । अपि ह्यदेवता देवतावत् स्तूयन्ते । यथाश्वप्रभृतीन्योषधिपर्यन्तानि । अथाप्यष्टौ द्वन्द्वानि । स न मन्येतागन्तूनिवार्थान् देवतानाम् । प्रत्यक्षदृश्यमेतद्भवति । माहाभाग्याद्देवताया एक आत्मा बहुधा स्तूयते । एकस्यात्मनोऽन्ये देवाः प्रत्यङ्गानि भवन्ति । अपि च सत्त्वानां प्रकृतिभूमभिर्ऋषयः स्तुवन्तीत्याहुः । प्रकृतिसार्वनाम्याच्च । इतरेतरजन्मानो भवन्ति । इतरेतरप्रकृतयः । कर्मजन्मानः । आत्मजन्मानः । आत्मैवैषां रथो भवति । आत्माश्वः । आत्मायुधम् । आत्मेषवः । आत्मा सर्वं देवस्य ४

तिस्र एव देवता इति नैरुक्ताः । अग्निः पृथिवीस्थानः । वायुर्वेन्द्रो वान्तरिक्षस्थानः । सूर्यो द्युस्थानः । तासां माहाभाग्यादेकैकस्या अपि बहूनि नामधेयानि भवन्ति । अपि वा कर्मपृथक्त्वात् । यथा होताध्वर्युर्ब्रह्मोद्गातेत्यप्येकस्य सतः । अपि वा पृथगेव स्युः । पृथग्घि स्तुतयो भवन्ति । तथाभिधानानि । यथो एतत्कर्मपृथक्त्वादिति बहवोऽपि विभज्य कर्माणि कुर्युः । तत्र संस्थानैकत्वं संभोगैकत्वं चोपेक्षितव्यम् । यथा पृथिव्यां मनुष्याः पशवो देवा इति स्थानैकत्वम् । संभोगैकत्वं च दृश्यते । यथा पृथिव्याः पर्जन्येन च वाय्वादित्याभ्यां च संभोगः । अग्निना चेतरस्य लोकस्य ।

तत्रैतन्नरराष्ट्रमिव ५

अथाकारचिन्तनं देवतानाम् । पुरुषविधाः स्युरित्येकम् ।
चेतनावद्वद्धि स्तुतयो भवन्ति । तथाभिधानानि ।
अथापि पौरुषविधिकैरङ्गैः संस्तूयन्ते ।

ऋृष्वा त इन्द्र स्थविरस्य बाहू ।
यत्सं गृभ्णा मघवन्काशिरित्ते ।

अथापि पौरुषविधिकैर्द्रव्यसंयोगैः ।

आ द्वाभ्यां हरिभ्यामिन्द्र याहि ।
कल्याणीर्जाया सुरणं गृहे ते ।

अथापि पौरुषविधिकैः कर्मभिः ।

अद्धीन्द्र पिब च प्रस्थितस्य ।
आश्रुत्कर्ण श्रुधी हवम् ६

अपुरुषविधाः स्युरित्यपरम् । अपि तु यद् दृश्यतेऽपुरुषविधं तत्
। यथाग्निर्वायुरादित्यः पृथिवी चन्द्रमा इति । यथो
एतच्चेतनावद्वद्धि स्तुतयो भवन्तीत्यचेतनान्यप्येवं स्तूयन्ते ।
यथाक्षप्रभृतीन्योषधिपर्यन्तानि । यथो एतत्पौरुषविधिकैरङ्गैः
संस्तूयन्त इत्यचेतनेष्वप्येतद्भवति ।

अभि क्रन्दन्ति हरितेभिरासभिः । इति ग्रावस्तुतिः ।

यथो एतत्पौरुषविधिकैर्द्रव्यसंयोगैरित्येतदपि तादृशमेव ।

सुखं रथं युयुजे सिन्धुरश्विनम् । इति नदीस्तुतिः ।

यथो एतत्पौरुषविधिकैः कर्मभिरित्येतदपि तादृशमेव ।

होतु॑श्चि॒त्पूर्वे॑ ह॒विर॒द्य॑माशत । इति ग्रावस्तुतिरेव ।

अपि वोभयविधाः स्युः । अपि वा पुरुषविधानामेव सतां कर्मात्मान एते स्युः । यथा यज्ञो यजमानस्य । एष चाख्यानसमयः ७

तिस्र एव देवता इत्युक्तं पुरस्तात् । तासां भक्तिसाहचर्यं व्याख्यास्यामः । अथैतान्यग्निभक्तीनि । अयं लोकः । प्रातः सवनं । वसन्तः । गायत्री । त्रिवृत्स्तोमः । रथंतरं साम । ये च देवगणाः समाम्नाताः प्रथमे स्थाने । अग्नायी पृथिवीळेति स्त्रियः । अथास्य कर्म । वहनं च हविषामावाहनं च देवतानाम् । यच्च दार्ष्टिविषयिकमग्निकर्मैव तत् । अथास्य संस्तविका देवाः । इन्द्रः । सोमः । वरुणः । पर्जन्यः । ऋतवः । आग्नावैष्णवं हविर्न त्वृक्संस्तविकी दशतयीषु विद्यते । अथाप्याग्नापौष्णं हविर्न तु संस्तवः । तत्रैतां विभक्तस्तुतिमृचमुदाहरन्ति ८

पू॒षा त्वे॒तश्च्या॑वयतु॒ प्र वि॒द्वाननं॑ष्टपशु॒र्भुव॑नस्य गो॒पाः ।
स त्वै॒तेभ्यः॒ परि॑ ददत्पि॒तृभ्यो॒ऽग्निर्दे॒वेभ्यः॑ सुविद॒त्रियें॑भ्यः ॥

पूषा त्वेतः प्रच्यावयतु । विद्वान् । अनष्टपशुः । भुवनस्य गोपा इत्येष हि सर्वेषां भूतानां गोपायिता आदित्यः । स त्वैतेभ्यः परिददत्पितृभ्य इति सांशयिकस्तृतीयः पादः । पूषा पुरस्तात्तस्यान्वादेश इत्येकम् । अग्निरुपरिष्टात्तस्य प्रकीर्तनेत्यपरम् । अग्निर्देवेभ्यः सुविदत्रियेभ्यः । सुविदत्रं धनं भवति । विन्दतेर्वैकोपसर्गात् । ददातेर्वा स्याद् द्व्युपसर्गात् ९

अथैतानीन्द्रभक्तीनि । अन्तरिक्षलोकः । माध्यंदिनं सवनम् । ग्रीष्मः । त्रिष्टुप् । पञ्चदशस्तोमः । बृहत्साम । ये च

देवगणाः समाम्नाता मध्यमे स्थाने याश्च स्त्रियः । अथास्य कर्म रसानुप्रदानं वृत्रवधः । या च का च बलकृतिरिन्द्रकर्मैव तत् । अथास्य संस्तविका देवाः । अग्निः । सोमः । वरुणः । पूषा । बृहस्पतिः । ब्रह्मणस्पतिः । पर्वतः । कुत्सः । विष्णुः । वायुः । अथापि मित्रो वरुणेन संस्तूयते । पूष्णा रुद्रेण च सोमः । वायुना च पूषा । वातेन च पर्जन्यः १०

अथैतान्यादित्यभक्तीनि । असौ लोकः । तृतीयसवनम् । वर्षा । जगती । सप्तदशस्तोमः । वैरूपं साम । ये च देवगणाः समाम्नाता उत्तमे स्थाने याश्च स्त्रियः । अथास्य कर्म रसादानं रश्मिभिश्च रसधारणम् । यच्च किञ्चित्प्रवह्लितमादित्यकर्मैव तत् । चन्द्रमसा वायुना संवत्सरेणेति संस्तवः । एतेष्वेव स्थानव्यूहेष्वृतुच्छन्दःस्तोमपृष्ठस्य भक्तिशेषमनुकल्पयीत । शरदनुष्टुबेकविंशस्तोमो वैराजं सामेति पृथिव्यायतनानि । हेमन्तः पङ्क्तिस्त्रिणवस्तोमः शाक्वरं सामेत्यन्तरिक्षायतनानि । शिशिरोऽतिच्छन्दास्त्रयस्त्रिंशस्तोमो रैवतं सामेति द्युभक्तीनि ११

मन्त्रा मननात् । छन्दांसि छादनात् । स्तोमः स्तवनात् । यजुर्यजतेः । साम सम्मितमृचा । अस्यतेर्वा । ऋचा समं मेन इति नैदानाः । गायत्री गायतेः स्तुतिकर्मणः । त्रिगमना वा विपरीता । गायतो मुखादुदपतत् । इति च ब्राह्मणम् । उष्णिगुत्स्नाता भवति । स्निह्यतेर्वा स्यात्कान्तिकर्मणः । उष्णीषिणी वेत्यौपमिकम् । उष्णीषं स्नायतेः । ककुप् ककुभिनी भवति । ककुप् च कुब्जश्च कुजतेर्वा । उब्जतेर्वा । अनुष्टुबनुष्टोभनात् ।
गायत्रीमेव त्रिपदां सतीं चतुर्थेन पादेनानुष्टोभति । इति च ब्राह्मणम् । बृहती परिबर्हणात् । पङ्क्तिः पञ्चपदा । त्रिष्टुप्

स्तोभत्युत्तरपदा । का तु त्रिता स्यात् । तीर्णतमं छन्दः ।
त्रिवृद्वज्रः । तस्य स्तोभनीति वा ।
यत् त्रिरस्तोभत् तत् त्रिष्टुभस्त्रिष्टुप्त्वम् । इति विज्ञायते १२

जगती गततमं छन्दः । जलचरगतिर्वा ।
गल्गल्यमानोऽसृजत् । इति च ब्राह्मणम् । विराड्विराजनाद्वा
। विराधनाद्वा । विप्रापणाद्वा । विराजनात्संपूर्णाक्षरा ।
विराधनादूनाक्षरा । विप्रापणादधिकाक्षरा ।
पिपीलिकमध्येत्यौपमिकम् । पिपीलिका पेलतेर्गतिकर्मणः ।
इतीमा देवता अनुक्रान्ताः । सूक्तभाजः । हविर्भाजः ।
ऋग्भाजश्च भूयिष्ठाः । काश्चिन्निपातभाजः । अथोताभिधानैः
संयुज्य हविश्चोदयति । इन्द्राय वृत्रघ्ने । इन्द्रायाँहोमुच इति ।
तान्यप्येके समामनन्ति । भूयांसि तु समाम्नानात् । यत्तु
संविज्ञानभूतं स्यात्प्राधान्यस्तुति तत्समामने । अथोत
कर्मभिर्ऋषिर्देवताः स्तौति । वृत्रहा । पुरन्दरः । इति ।
तान्यप्येके समामनन्ति । भूयांसि तु समाम्नानात् । व्यञ्जनमात्रं
तु तत् तस्याभिधानस्य भवति । यथा ब्राह्मणाय बुभुक्षितायौदनं
देहि । स्नातायानुलेपनम् । पिपासते पानीयमिति १३

अथातोऽनुक्रमिष्यामः । अग्निः पृथिवीस्थानः । तं प्रथमं
व्याख्यास्यामः । अग्निः कस्मात् । अग्रणीर्भवति । अग्रं यज्ञेषु
प्रणीयते । अङ्गं नयति सन्नममानः । अक्नोपनो भवतीति
स्थौलाष्ठीविः । न क्नोपयति न स्नेहयति । त्रिभ्य आख्यातेभ्यो
जायत इति शाकपूणिः । इतात् । अक्ताद्दग्धाद्वा । नीतात् ।
स खल्वेतेरकारमादत्ते गकारमनक्तेर्वा दहतेर्वा नीः परः । तस्यैषा
भवति १४

अ॒ग्निमी॑ळे पु॒रोहि॑तं य॒ज्ञस्य॑ दे॒वमृ॒त्विज॑म् ।

होतारं रत्नधातमम् ॥

अग्निमीळेऽग्निं याचामि । ईळिरध्येषणाकर्मा । पूजाकर्मा वा ।
पुरोहितो व्याख्यातो यज्ञश्च । देवो दानाद्वा । दीपनाद्वा ।
द्योतनाद्वा । द्युस्थानो भवतीति वा । यो देवः सा देवता ।
होतारं ह्वातारम् । जुहोतेर्होतेत्यौर्णवाभः । रत्नधातमं रमणीयानां
धनानां दातृतमम् ।
तस्यैषापरा भवति १५

अग्निः पूर्वेभिर्ऋषिभिरीड्यो नूतनैरुत ।
स देवाँ एह वक्षति ॥

अग्निर्यः पूर्वैर्ऋषिभिरीळितव्यो वन्दितव्योऽस्माभिश्च नवतरैः स
देवानिहावहत्विति । स न मन्येतायमेवाग्निरिति । अप्येते उत्तरे
ज्योतिषी अग्नी उच्येते ।
ततो नु मध्यमः १६

अभि प्रवन्त समनेव योषाः कल्याण्य१ः स्मयमानासो अग्निम् ।
घृतस्य धाराः समिधो नसन्त ता जुषाणो हर्यति जातवेदाः ॥

अभिनमन्त समनस इव योषाः । समनं समननाद्वा ।
संमाननाद्वा । कल्याण्यः । स्मयमानासः ।
अग्निमित्यौपमिकम् । घृतस्य धारा उदकस्य धाराः समिधो
नसन्त । नसतिराप्नोतिकर्मा वा । नमतिकर्मा वा । ता जुषाणो
हर्यति जातवेदाः । हर्यतिः प्रेप्साकर्मा । विहर्यतीति ।

समुद्रादूर्मिर्मधुमाँ उदारत् । इत्यादित्यमुक्तं मन्यन्ते ।
समुद्राद्ध्येषोऽद्भ्य उदेति । इति च ब्राह्मणम् ।
अथापि ब्राह्मणं भवति ।

अग्निः सर्वा देवताः । इति । तस्योत्तरा भूयसे निर्वचनाय १७

इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान् ।
एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः ॥

इममेवाग्निं महान्तं आत्मानं बहुधा मेधाविनो वदन्ति । इन्द्रं मित्रं वरुणमग्निं दिव्यं च गरुत्मन्तम् । दिव्यो दिविजः । गरुत्मान् गरणवान् । गुर्वात्मा । महात्मेति वा ।
यस्तु सूक्तं भजते यस्मै हविर्निरुप्यतेऽयमेव सोऽग्निः ।
निपातमेवैते उत्तरे ज्योतिषी एतेन नामधेयेन भजेते १८

जातवेदाः कस्मात् । जातानि वेद । जातानि वैनं विदुः ।
जाते जाते विद्यत इति वा । जातवित्तो वा । जातधनः ।
जातविद्यो वा जातप्रज्ञानः ।
यतज्ञातः पशूनविन्दत इति तज्ञातवेदसो जातवेदस्त्वम् । इति ब्राह्मणम् ।
तस्मात्सर्वानृतून्पशवोऽग्निमभिसर्पन्ति । इति च ।
तस्यैषा भवति १९

जातवेदसे सुनवाम सोममरातीयतो नि दहाति वेदः ।
स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः ॥

जातवेदस इति जातवेदस्यां वैवं जातवेदसेऽर्चाय सुनवाम सोममिति । प्रसवायाभिषवाय सोमं राजानममृतमरातीयतो यज्ञार्थमिति स्मोः । निदहाति निश्चयेन दहति भस्मीकरोति । सोमो ददादित्यर्थः । स नः पर्षदति दुर्गाणि विश्वानि दुर्गमानि स्थानानि नावेव सिन्धुं नावा सिन्धुं सिन्धुं नावा नदीं जलदुर्गां महाकूलां तारयति । दुरितात्यग्निरिति दुरितानि तारयति ।
तस्यैषापरा भवति २ २५

प्र नूनं जातवेदसमश्वं हिनोत वाजिनम् ।
इदं नो बर्हिरासदे ॥

प्रहिणुत जातवेदसं कर्मभिः समश्नुवानम् । अपि वोपमार्थे स्यात् । अश्वमिव जातवेदसमिति । इदं नो बर्हिरासीदत्विति । तदेतदेकमेव जातवेदसं गायत्रं तृचं दशतयीषु विद्यते । यत्तु किञ्चिदाग्नेयं तज्जातवेदसानां स्थाने युज्यते । स न मन्येतायमेवाग्निरिति । अप्येते उत्तरे ज्योतिषी जातवेदसी उच्येते । ततो नु मध्यमः ।

अभि प्रवन्त समनेव योषाः । इति तत्पुरस्ताद् व्याख्यातम् ।

अथासावादित्यः ।

उदु त्यं जातवेदसम् । इति । तदुपरिष्टाद्व्याख्यास्यामः ।

यस्तु सूक्तं भजते यस्मै हविर्निरुप्यतेऽयमेव सोऽग्निर्जातवेदाः । निपातमेवैते उत्तरे ज्योतिषी एतेन नामधेयेन भजेते २०

वैश्वानरः कस्मात् । विश्वान्नरान्नयति । विश्व एनं नरा नयन्तीति वा । अपि वा विश्वानर एव स्यात् । प्रत्यृतः सर्वाणि भूतानि तस्य वैश्वानरः ।
तस्यैषा भवति २१

वैश्वानरस्य सुमतौ स्याम राजा हि कं भुवनानामभिश्रीः ।
इतो जातो विश्वमिदं वि चष्टे वैश्वानरो यतते सूर्येण ॥

इतो जातः सर्वमिदमभिविपश्यति । वैश्वानरः संयतते सूर्येण । राजा यः सर्वेषां भूतानामभिश्रयणीयस्तस्य वयं वैश्वानरस्य कल्याण्यां मतौ स्यामेति । तत्को वैश्वानरः । मध्यम

इत्याचार्याः । वर्षकर्मणा ह्येनं स्तौति २२

प्र नू म॑हि॒त्वं वृ॑ष॒भस्य॑ वोचं॒ यं पू॒रवो॑ वृ॒त्रह॒णं॒ सच॑न्ते ।
वै॒श्वा॒न॒रो दस्यु॑म॒ग्निर्ज॑घ॒न्वाँ अधू॑नो॒त्काष्ठा॒ अव॒ शम्ब॑रं भेत् ॥

प्रब्रवीमि तत् । महत्त्वं माहाभाग्यम् । वृषभस्य वर्षितुरपाम् ।
यं पूरवः पूरयितव्या मनुष्याः । वृत्रहणं मेघहनम् । सचन्ते
सेवन्ते वर्षकामाः । दस्युर्दस्यतेः । क्षयार्थात् ।
उपदस्यन्त्यस्मिन्नसाः । उपदासयति कर्माणि । तमग्निर्वैश्वानरो
घ्नन् । अवाधूनोदपः काष्ठा अभिनत् । शम्बरं मेघम् ।
अथासावादित्य इति पूर्वे याज्ञिकाः । एषां लोकानां रोहेण
सवनानां रोह आम्नातः । रोहात्प्रत्यवरोहश्चिकीर्षितः ।
तामनुकृतिं होताग्निमारुते शस्त्रे वैश्वानरीयेण सूक्तेन प्रतिपद्यते ।
सोऽपि च स्तोत्रियमाद्रियेत । आग्नेयो हि भवति । तत
आगच्छति मध्यमस्थाना देवता । रुद्रं च मरुतश्च ।
ततोऽग्निमिहस्थानमत्रैव स्तोत्रियं शंसति ।
अथापि वैश्वानरीयो द्वादशकपालो भवति । एतस्य हि द्वादशविधं
कर्म ।
अथापि ब्राह्मणं भवति ।
असौ वा आदित्योऽग्निर्वैश्वानरः । इति ।
अथापि निवित्सौर्यवैश्वानरी भवति ।
आ यो द्यां भात्या पृथिवीम् । इति । एष हि
द्यावापृथिव्यावाभासयति ।
अथापि छान्दोमिकं सूक्तं सौर्यवैश्वानरं भवति ।

दि॒वि पृ॒ष्टो अ॑रोचत । इति । एष हि दिवि पृष्टो अरोचतेति ।
अथापि हविष्पान्तीयं सूक्तं सौर्यवैश्वानरं भवति ।
अयमेवाग्निर्वैश्वानर इति शाकपूणिः । विश्वानरावित्यप्येते उत्तरे

ज्योतिषी । वैश्वानरोऽयं यत् ताभ्यां जायते । कथं त्वयमेताभ्यां जायत इति ।
यत्र वैद्युतः शरणमभिहन्ति यावदनुपात्तो भवति मध्यमधर्मैव तावद् भवत्युदकेन्धनः शरीरोपशमनः । उपादीयमान एवायं सम्पद्यत उदकोपशमनः शरीरदीप्तिः ।
अथादित्यात् । उदीचि प्रथमसमावृत्त आदित्ये कंसं वा मणिं वा परिमृज्य प्रतिस्वरे यत्र शुष्कगोमयमसंस्पर्शयन् धारयति तत्प्रदीप्यते । सोऽयमेव सम्पद्यते । अथाप्याह ।

वैश्वा॒नरो य॑तते॒ सूर्ये॑ण । इति । न च पुनरात्मनात्मा संयतते ।

अन्येनैवान्यः संयतते । इत इममादधात्यमुतोऽमुष्य रश्मयः प्रादुर्भवन्ति । इतोऽस्यार्चिषस्तयोर्भासोः संसङ्गं दृष्ट्वैवमवक्ष्यत् । अथ यान्येतान्यौत्तमिकानि सूक्तानि भागानि वा सावित्राणि वा सौर्याणि वा पौष्णानि वा वैष्णवानि वा वैश्वदेव्यानि वा तेषु वैश्वानरीया प्रवादा अभविष्यन् । आदित्यकर्मणा चैनमस्तोष्यन्निति । उदेषीति अस्तमेषीति । विपर्येषीति । आग्नेयेष्वेव हि सूक्तेषु वैश्वानरीयाः प्रवादा भवन्ति । अग्निकर्मणा चैनं स्तौतीति । वहसीति । पचसीति । दहसीति । यथो एतद्वर्षकर्मणा ह्येनं स्तौतीत्यस्मिन्नप्येतदुपपद्यते ।

स॒मा॒नमे॒तदु॑द॒कमु॒च्चैत्यव॒ चाह॑भिः ।
भूमिं॑ प॒र्जन्या॒ जिन्व॑न्ति॒ दिवं॑ जिन्वन्त्य॒ग्नय॑ः ॥

इति सा निगदव्याख्याता २३

कृ॒ष्णं नि॒यानं॒ हर॑यः सु॒प॒र्णा अ॒पो वसा॑ना॒ दिव॒मुत्प॑तन्ति ।
त आ व॑वृत्र॒न्त्सद॑नादृ॒तस्यादिद् घृ॒तेन॑ पृथि॒वी व्यु॑द्यते ॥

कृष्णं निरयणं रात्रिः । आदित्यस्य हरयः सुपर्णा हरणा
आदित्यरश्मयः । ते यदामुतोऽर्वाञ्चः पर्यावर्तन्ते ।
सहस्थानादुदकस्यादित्यात् । अथ घृतेनोदकेन पृथिवी व्युद्यते ।
घृतमित्युदकनाम । जिघर्तेः सिञ्चतिकर्मणः ।
अथापि ब्राह्मणं भवति ।
अग्निर्वा इतो वृष्टिं समीरयति धामच्छद्दिवि खलु वै भूत्वा वर्षति
मरुतः सृष्टां वृष्टिं नयन्ति । यदा खलु वै असावादित्योऽग्निं
रश्मिभिः पर्यावर्ततेऽथ वर्षति । इति ।
यथो एतद्रोहात् प्रत्यवरोहश्चिकीर्षित इत्याम्नायवचनादेतद् भवति ।
यथो एतद्वैश्वानरीयो द्वादशकपालो भवतीत्यनिर्वचनं कपालानि
भवन्ति । अस्ति हि सौर्य एककपालः पञ्चकपालश्च ।
यथो एतद् ब्राह्मणं भवतीति बहुभक्तिवादीनि हि ब्राह्मणानि भवन्ति
। पृथिवी वैश्वानरः । संवत्सरो वैश्वानरः । ब्राह्मणो वैश्वानरः ।
इति ।
यथो एतन्निवित्सौर्यवैश्वानरी भवतीत्यस्यैव सा भवति ।
यो विड्भ्यो मानुषीभ्यो दीदेत् । इत्येष हि विड्भ्यो मानुषीभ्यो
दीप्यते ।
यथो एतच्छान्दोमिकं सूक्तं सौर्यवैश्वानरं भवतीत्यस्यैव तद्भवति ।
जमदग्निभिराहुतः । इति जमदग्नयः प्रजमिताग्नयो वा ।
प्रज्वलिताग्नयो वा । तैरभिहुतो भवति ।
यथो एतद्धविष्पान्तीयं सूक्तं सौर्यवैश्वानरं भवतीत्यस्यैव तद्भवति
२४

ह॒विष्पान्त॑म॒जरं॑ स्व॒र्विदि॑ दि॒वि॒स्पृश्याहु॑तं॒ जुष्ट॑म॒ग्नौ ।
तस्य॒ भर्म॑णे॒ भुव॑नाय दे॒वा धर्म॑णे॒ कं स्व॒धया॑पप्रथन्त ॥

हविर्यत्पानीयम् । अजरम् । सूर्यविदि । दिविस्पृशि ।

अभिहुतं जुष्टमग्नौ । तस्य भरणाय च भावनाय च धारणाय च । एतेभ्यः सर्वेभ्यः कर्मभ्यो देवा इममग्निमन्नेनापप्रथन्त । अथाप्याह २५

अपामुपस्थे महिषा अंगृभ्णत विशो राजानमुप तस्थुर्ऋग्मियम् ।
आ दूतो अग्निमभरद्विवस्वतो वैश्वानरं मातरिश्वा परावतः ॥

अपामुपस्थ उपस्थाने महत्यन्तरिक्षलोक आसीना महान्त इति वागृह्णत माध्यमिका देवगणाः । विश इव राजानमुपतस्थुः । ऋग्मियमृग्मन्तमिति वा । अर्चनीयमिति वा पूजनीयमिति वा । अहरद्यं दूतो देवानां विवस्वत आदित्यात् । विवस्वान्विवासनवान् । प्रेरितवतः परागताद्वा अपि वा अस्याग्नेर्वैश्वानरस्य मातरिश्वानमाहर्तारमाह । मातरिश्वा वायुः । मातर्यन्तरिक्षे श्वसिति । मातर्याश्वनितीति वा । अथैनमेताभ्यां सर्वाणि स्थानान्यभ्यापादं स्तौति २६

मूर्धा भुवो भवति नक्तमग्निस्ततः सूर्यो जायते प्रातरुद्यन् ।
मायामू तु यज्ञियानामेतामपो यत्तूर्णिश्चरति प्रजानन् ॥

मूर्धा मूर्तमस्मिन्धीयते । मूर्धा यः सर्वेषां भूतानां भवति नक्तमग्निः । ततः सूर्यो जायते प्रातरुद्यन्त्स एव । प्रज्ञां त्वेतां मन्यन्ते यज्ञियानां देवानां यज्ञसंपादिनाम् । अपो यत्कर्म चरति प्रजानन्त्सर्वाणि स्थानान्यनुसंचरति त्वरमाणः । तस्योत्तरा भूयसे निर्वचनाय २७

स्तोमेन हि दिवि देवासो अग्निमजीजनञ्छक्तिभी रोदसिप्राम् ।
तमू अकृण्वंस्त्रेधा भुवे कं स ओषधीः पचति विश्वरूपाः ॥

स्तोमेन हि यं दिवि देवा अग्निमजनयन् शक्तिभिः

कर्मभिर्द्यावापृथिव्योः आ पूरणम् । तमकुर्वंस्त्रेधाभावाय ।
पृथिव्यामन्तरिक्षे दिवीति शाकपूणिः ।
यदस्य दिवि तृतीयं तदसावादित्यः । इति हि ब्राह्मणम् ।
तदग्नीकृत्य स्तौति । अथैनमेतयादित्यीकृत्य स्तौति २८

यदेदेनमदधुर्यज्ञियासो दिवि देवाः सूर्यमादितेयम् ।
यदा चरिष्णू मिथुनावभूतामादित्प्रापश्यन्भुवनानि विश्वा ॥

यदैनमदधुर्यज्ञियाः सर्वे दिवि देवाः सूर्यमदितेः पुत्रम् । यदा
चरिष्णू मिथुनौ प्रादुरभूतां सर्वदा सहचारिणौ । उषाश्चादित्यश्च ।
मिथुनौ कस्मात् । मिनोतिः श्रयतिकर्मा । थु इति नामकरणः ।
थकारो वा । नयतिः परः । वनिर्वा । समाश्रितावन्योन्यं
नयतः । वनुतो वा । मनुष्यमिथुनावप्येतस्मादेव ।
मेथन्तावन्योन्यं वनुत इति वा ।
अथैनमेतयाग्नीकृत्य स्तौति २९

यत्रा वदेते अवरः परश्च यज्ञन्योः कतरो नौ वि वेद ।
आ शेकुरित्सधमादं सखायो नक्षन्त यज्ञं क इदं वि वोचत् ॥

यत्र विवदेते दैव्यौ होतारौ । अयं चाग्निरसौ च मध्यमः । कतरो
नौ यज्ञे भूयो वेद । इत्याशक्नुवन्ति । तत्सहमदनं
समानाख्याना ऋत्विजस्तेषां यज्ञं समश्नुवानानां को न इदं
विवक्ष्यतीति ।
तस्योत्तरा भूयसे निर्वचनाय ३०

यावन्मात्रमुषसो न प्रतीकं सुपर्ण्यो३ वसते मातरिश्वः ।
तावद्दधात्युप यज्ञमायन्ब्राह्मणो होतुरवरो नि षीदन् ॥

यावन्मात्रमुषसः प्रत्यक्तं भवति प्रतिदर्शनमिति वा ।

अस्त्युपमानस्य संप्रत्यर्थे प्रयोगः । इहेव निधेहीति यथा ।
सुपर्ण्यः सुपतनाः । एता रात्रयो वसते मातरिश्वञ्ज्योतिर्वर्णस्य ।
तावदुपदधाति यज्ञमागच्छन् ब्राह्मणो होतास्याग्नेर्होतुरवरो निषीदन् ।
होतृजपस्त्वनग्निर्वैश्वानरीयो भवति । देव सवितरेतं त्वा वृणतेऽग्निं
होत्राय सह पित्रा वैश्वानरेण । इति । इममेवाग्निं सवितारमाह
। सर्वस्य प्रसवितारम् । मध्यमं वा । उत्तमं वा पितरम् ।
यस्तु सूक्तं भजते यस्मै हविर्निरुप्यतेऽयमेव सोऽग्निर्वैश्वानरः ।
निपातमेवैते उत्तरे ज्योतिषी एतेन नामधेयेन भजेते भजेते ३१

अथातो दैवतमिन्द्रोदिवः परोक्षकृतास्तद्ये तिस्र एव देवता
अथाकारचिन्तनमपुरुषविधास्तिस्र एव देवता इत्युक्तं
पूषात्वेतोऽथैतानीन्द्रभक्तीन्यथैतान्यादित्यभक्तीनि मन्त्रा मननाज्जगती
गततममथातोऽनुक्रमिष्यामोऽग्निमीलेऽग्निः पूर्वेभिरभिप्रवन्तेन्द्र मित्रं
जातवेदाः कस्मात्प्रनूनं वै जातवेदसं वैश्वानरः कस्माद्वैश्वानरस्य प्रनू
महित्वं कृष्णं नियानं हविष्पान्तमपामुपस्थे मूर्धाभुवः स्तोमेन यदे-
देन यत्रावदेते यावन्मात्रमेकत्रिंशत् ।

इत्युत्तरषट्के प्रथमोऽध्यायः

इति निरुक्ते सप्तमोऽध्यायः

## अथाष्टमोऽध्यायः

द्रविणोदाः कस्मात् । धनं द्रविणमुच्यते । यदेनमभिद्रवन्ति ।
बलं वा द्रविणम् । यदेनेनाभिद्रवन्ति । तस्य दाता द्रविणोदाः ।
तस्यैषा भवति १

द्रविणोदा द्रविणसो ग्रावहस्तासो अध्वरे ।
यज्ञेषु देवमीळते ॥

द्रविणोदा यस्त्वम् । द्रविणस इति द्रविणसादिन इति वा ।
द्रविणसानिन इति वा । द्रविणसस्तस्मात्पिबत्विति वा । यज्ञेषु
देवमीळते । याचन्ति स्तुवन्ति वर्धयन्ति पूजयन्तीति वा ।
तत्को द्रविणोदाः । इन्द्र इति क्रौष्टुकिः । स बलधनयोर्दातृतमः
। तस्य च सर्वा बलकृतिः ।
ओजसो जातमुत मन्य एनम् । इति चाह ।
अथाप्यग्निं द्राविणोदसमाह । एष पुनरेतस्माज्जायते ।
यो अश्मनोरन्तरग्निं जजान । इत्यपि निगमो भवति ।
अथाप्यृतुयाजेषु द्राविणोदसाः प्रवादा भवन्ति । तेषां पुनः
पात्रस्येन्द्रपानमिति भवति ।
अथाप्येनं सोमपानेन स्तौति । अथाप्याह ।

द्रविणोदाः पिबतु द्राविणोदसः । इति ।

अयमेवाग्निर्द्रविणोदा इति शाकपूणिः । आग्नेयेष्वेव हि सूक्तेषु
द्राविणोदसाः प्रवादा भवन्ति ।

देवा अग्निं धारयन्द्रविणोदाम् । इत्यपि निगमो भवति ।

यथो एतत्स बलधनयोर्दातृतम इति सर्वासु देवतास्वैश्वर्यं विद्यते ।
यथो एतदोजसो जातमुत मन्य एनमिति चाहेति ।

अयमप्यग्निरोजसा बलेन मथ्यमानो जायते । तस्मादेनमाह सहसस्पुत्रं सहसः सूनुं सहसो यहुम् ।
यथो एतदग्निं द्राविणोदसमाहेति । ऋत्विजोऽत्र द्रविणोदस उच्यन्ते । हविषो दातारस्ते चैनं जनयन्ति ।

ऋषीणां पुत्रो अधिराज एषः । इत्यपि निगमो भवति ।
यथो एतत्तेषां पुनः पात्रस्येन्द्रपानमिति भवतीति भक्तिमात्रं तद्भवति । यथा वायव्यानीति सर्वेषां सोमपात्राणाम् ।
यथो एतत्सोमपानेनैनं स्तौतीत्यस्मिन्नप्येतदुपपद्यते ।

सोमं पिब मन्दसानो गणश्रिभिः । इत्यपि निगमो भवति ।

यथो एतद् द्रविणोदाः पिबतु द्राविणोदस इत्यस्यैव तद्भवति २

मेद्यन्तु ते वह्नयो येभिरीयसेऽरिषण्यन्वीळयस्वा वनस्पते ।
आयूया धृष्णो अभिगूर्या त्वं नेष्ट्रात्सोमं द्रविणोदः पिब ऋतुभिः ॥

मेद्यन्तु ते । वह्नयो वोळ्हारः । यैर्यासि । अरिष्यन् ।
दृढीभव । आयूय धृष्णो अभिगूर्य त्वं नेष्ट्रीयात् । धिष्ण्यात् ।
धिष्णो धिष्ण्यो धिषणाभवः । धिषणा वाक् धिषेर्दधात्यर्थे ।
धीसादिनीति वा धीसानिनीति वा । वनस्पत इत्येनमाह । एष हि वनानां पाता वा पालयिता वा । वनं वनोतेः । पिब ।
ऋतुभिः कालैः ३

अथात आप्रियः । आप्रियः कस्मात् । आप्नोतेः । प्रीणातेर्वा ।
आप्रीभिराप्रीणाति । इति च ब्राह्मणम् ।
तासामिध्मः प्रथमागामी भवति । इध्मः समिन्धनात् ।
तस्यैषा भवति ४

समिद्धो अद्य मनुषो दुरोणे देवो देवान्यजसि जातवेदः ।

ऄा च वह मित्रमहश्चिकित्वान्त्वं दूतः कविरसि प्रचेताः ॥

समिद्धोऽद्य मनुष्यस्य मनुष्यस्य गृहे देवो देवान्यजसि जातवेदः । ऄा च वह मित्रमहः । चिकित्वांश्चेतनावान् । त्वं दूतः कविरसि । प्रचेताः प्रवृद्धचेताः । यज्ञेध्म इति कात्थक्यः । ऄग्निरिति शाकपूणिः ।
तनूनपादाज्यमिति कात्थक्यः । नपादित्यननन्तरायाः प्रजाया नामधेयम् । निर्णततमा भवति । गौरत्र तनूरुच्यते । तता ऄस्यां भोगाः । तस्याः पयो जायते । पयस ऄाज्यं जायते । ऄग्निरिति शाकपूणिः । ऄापोऽत्र तन्व उच्यन्ते । तता ऄन्तरिक्षे । ताभ्य ऄोषधिवनस्पतयो जायन्ते । ऄोषधिवनस्पतिभ्य एष जायते । तस्यैषा भवति ५

तनूनपात्पथ ऋतस्य यानान्मध्वा समञ्जन्त्स्वदया सुजिह्व ।
मन्मानि धीभिरुत यज्ञमृन्धन्देवत्रा च कृणुह्यध्वरं नः ॥

तनूनपात्पथ ऋतस्य यानान्यज्ञस्य यानान् । मधुना समञ्जन्त्स्वदय कल्पाणजिह्व । मननानि च नो धीभिर्यज्ञं च समर्धय । देवान्नो यज्ञं गमय ।
नराशंसो यज्ञ इति कात्थक्यः । नरा ऄस्मिन्नासीनः शंसन्ति । ऄग्निरिति शाकपूणिः । नरैः प्रशस्यो भवति । तस्यैषा भवति ६

नराशंसस्य महिमानमेषामुप स्तोषाम यजतस्य यज्ञैः ।
ये सुक्रतवः शुचयो धियंधाः स्वदन्ति देवा उभयानि हव्या ॥

नराशंसस्य महिमानमेषामुपस्तुमो यज्ञियस्य यज्ञैः । ये सुकर्माणः शुचयो धियं धारयितारः स्वदयन्तु देवा उभयानि हवींषि । सोमं चेतराणि चेति वा । तान्त्राणि चावापिकानि चेति वा ।
ईळ ईट्टेः स्तुतिकर्मणः । इन्धतेर्वा । तस्यैषा भवति ७

आजुह्वान ईळ्यो वन्द्यश्चा याह्यग्ने वसुभिः सजोषाः ।
त्वं देवानामसि यह्व होता स एनान्यक्षीषितो यजीयान् ॥

आहूयमान ईळितव्यो वन्दितव्यश्च । आयाह्यग्ने वसुभिः सहजोषणः । त्वं देवानामसि यह्व होता । यह्व इति महतो नामधेयम् । यातश्च हूतश्च भवति । स एनान्यक्षीषितो यजीयान् । इषितः प्रेषित इति वाधीष्ट इति वा । यजीयान्यष्टृतरः ।
बर्हिः परिबर्हणात् । तस्यैषा भवति ८

प्राचीनं बर्हिः प्रदिशा पृथिव्या वस्तोरस्या वृज्यते अग्रे अह्नाम् ।
व्यु प्रथते वितरं वरीयो देवेभ्यो अदितये स्योनम् ॥

प्राचीनं बर्हिः प्रदिशा पृथिव्या वसनाय । अस्याः प्रवृज्यतेऽग्रेऽह्नां बर्हिः पूर्वाह्णे । तद्विप्रथते विकीर्णतरमिति वा विस्तीर्णतरमिति वा । वरीयो वरतरम् । उरुतरं वा । देवेभ्यश्चादितये च स्योनम् । स्योनमिति सुखनाम स्यतेः । अवस्यन्त्येतत् । सेवितव्यं भवतीति वा ।
द्वारो जवतेर्वा । द्रवतेर्वा । वारयतेर्वा । तासामेषा भवति ९

व्यचस्वतीरुर्विया वि श्रयन्तां पतिभ्यो न जनयः शुम्भमानाः ।
देवीर्द्वारो बृहतीर्विश्वमिन्वा देवेभ्यो भवत सुप्रायणाः ॥

व्यञ्चनवत्य उरुत्वेन विश्रयन्ताम् । पतिभ्य इव जायाः । ऊरू मैथुने धर्मे शुशोभिषमाणाः । वरतममङ्गमूरू । देव्यो द्वारः । बृहत्यो महत्यः । विश्वमिन्वा विश्वमाभिरेति यज्ञे । गृहद्वार इति कात्थक्यः । अग्निरिति शाकपूणिः ।
उषासानक्ता । उषाश्च नक्ता च । उषा व्याख्याता । नक्तेति रात्रिनाम । अनक्ति भूतान्यवश्यायेन । अपि वा नक्ताव्यक्तवर्णा । तयोरेषा भवति १०

आ सुष्वयन्ती यजते उपाके उषासानक्ता सदतां नि योनौ ।
दिव्ये योषणे बृहती सुरुक्मे अधि श्रियं शुक्रपिशं दधाने ॥

सेष्मीयमाणे इति वा । सुष्वापयन्त्याविति वा । सीदतामिति वा । न्यासीदतामिति वा । यज्ञिये उपक्रान्ते दिव्ये योषणे । बृहत्यौ महत्यौ । सुरुक्मे सुरोचने । अधिदधाने शुक्रपेशसं श्रियम् । शुक्रं शोचतेर्ज्वलतिकर्मणः । पेश इति रूपनाम । पिंशतेः । विपिशितं भवति ।
दैव्या होतारा दैव्यौ होतारौ । अयं चाग्निरसौ च मध्यमः । तयोरेषा भवति ११

दैव्या होतारा प्रथमा सुवाचा मिमाना यज्ञं मनुषो यजध्यै ।
प्रचोदयन्ता विदथेषु कारू प्राचीनं ज्योतिः प्रदिशा दिशन्ता ॥

दैव्यौ होतारौ प्रथमौ सुवाचौ निर्मिमानौ यज्ञं मनुष्यस्य यजनाय । प्रचोदयमानौ यज्ञेषु कर्तारौ पूर्वस्यां दिशि यष्टव्यमिति प्रदिशन्तौ । तिस्रो देवीस्तिस्रो देव्यः । तासामेषा भवति १२

आ नो यज्ञं भारती तूयमेत्विळा मनुष्वदिह चेतयन्ती ।
तिस्रो देवीर्बर्हिरेदं स्योनं सरस्वती स्वपसः सदन्तु ॥

एतु नो यज्ञं भारती क्षिप्रम् । भरत आदित्यस्तस्य भाः । ईळा च मनुष्यवदिह चेतयमाना । तिस्रो देव्यो बर्हिरिदं सुखं सरस्वती च सुकर्माण आसीदन्तु ।
त्वष्टा तूर्णमश्नुत इति नैरुक्ताः । त्विषेर्वा स्यात् । दीप्तिकर्मणः । त्वक्षतेर्वा स्यात् । करोतिकर्मणः । तस्यैषा भवति १३

य इमे द्यावापृथिवी जनित्री रूपैरपिंशद्भुवनानि विश्वा ।
तमद्य होतरिषितो यजीयान्देवं त्वष्टारमिह यक्षि विद्वान् ॥

य इमे द्यावापृथिव्यौ जनयित्र्यौ रूपैरकरोद् भूतानि च सर्वाणि ।
तमद्य होतरिषितो यजीयान् देवं त्वष्टारमिह यज विद्वान् ।
माध्यमिकस्त्वष्टेत्याहुः । मध्यमे च स्थाने समाम्नातः ।
अग्निरिति शाकपूणिः । तस्यैषापरा भवति १४

आविष्ट्यो वर्धते चारुरासु जिह्मानामूर्ध्वः स्वयशा उपस्थे ।
उभे त्वष्टुर्बिभ्यतुर्जायमानात्प्रतीची सिंहं प्रति जोषयेते ॥

आविरावेदनात् । तत्त्यो वर्धते चारुरासु । चारु चरतेः । जिह्मं जिहीतेः । ऊर्ध्वमुद्धृतं भवति । स्वयशा आत्मयशाः । उपस्थ उपस्थाने । उभे त्वष्टुर्बिभ्यतुर्जायमानात् । प्रतीची सिंहं प्रति जोषयेते । द्यावापृथिव्याविति वा । अहोरात्रे इति वा । अरणी इति वा । प्रत्यक्ते सिंहं सहनं प्रत्यासेवेते १५

वनस्पतिर्व्याख्यातः । तस्यैषा भवति १६

उपाव सृज त्मन्या समञ्जन्देवानां पाथ ऋतुथा हवींषि ।
वनस्पतिः शमिता देवो अग्निः स्वदन्तु हव्यं मधुना घृतेन ॥

उपावसृजात्मनात्मानं समञ्जन्देवानामन्नमृतावृतौ हवींषि काले काले । वनस्पतिः शमिता देवो अग्निरित्येते त्रयः स्वदयन्तु हव्यं मधुना च घृतेन च ।
तत्को वनस्पतिः । यूप इति कात्थक्यः । अग्निरिति शाकपूणिः । तस्यैषापरा भवति १७

अञ्जन्ति त्वामध्वरे देवयन्तो वनस्पते मधुना दैव्येन ।
यदूर्ध्वस्तिष्ठा द्रविणेह धत्ताद्यद्वा क्षयो मातुरस्या उपस्थे ॥

अञ्जन्ति त्वामध्वरे देवान्कामयमाना वनस्पते मधुना दैव्येन च घृतेन च । यदूर्ध्वः स्थास्यसि । द्रविणानि च नो दास्यसि ।

यद्वा ते कृतः क्षयो मातुरस्या उपस्थ उपस्थाने ।
अग्निरिति शाकपूणिः । तस्यैषापरा भवति १८

देवेभ्यो वनस्पते हवींषि हिरण्यपर्ण प्रदिवस्ते अर्थम् ।
प्रदक्षिणिद्रशनया नियूय ऋतस्य वक्षि पथिभी रजिष्ठैः ॥

देवेभ्यो वनस्पते हवींषि हिरण्यपर्ण ऋतपर्ण । अपि वोपमार्थे स्यात् । हिरण्यवर्णपर्णेति । प्रदिवस्ते अर्थं पुराणस्ते सोऽर्थो यं ते प्रब्रूमः । यज्ञस्य वह पथिभी रजिष्ठैर्ऋजुतमैः । रजस्वलतमैः । तपिष्ठतमैरिति वा । तस्यैषापरा भवति १९

वनस्पते रशनया नियूय पिष्टतमया वयुनानि विद्वान् ।
वह देवत्रा दिधिषो हवींषि प्र च दातारममृतेषु वोचः ॥

वनस्पते रशनया नियूय सुरूपतमया । वयुनानि विद्वान् प्रज्ञानानि प्रजानन् । वह देवान् यज्ञे दातुर्हवींषि । प्रब्रूहि च दातारममृतेषु देवेषु ।
स्वाहाकृतयः । स्वाहेत्येतत्सु आहेति वा । स्वा वागाहेति वा । स्वं प्राहेति वा । स्वाहुतं हविर्जुहोतीति वा । तासामेषा भवति २०

सद्यो जातो व्यमिमीत यज्ञमग्निर्देवानामभवत्पुरोगाः ।
अस्य होतुः प्रदिश्यृतस्य वाचि स्वाहाकृतं हविरदन्तु देवाः ॥

सद्यो जायमानो निरमिमीत यज्ञम् । अग्निर्देवानामभवत्पुरोगामी । अस्य होतुः प्रदिश्यृतस्य वाच्यास्ये स्वाहाकृतं हविरदन्तु देवाः इति यजन्ति ।
इतीमा आप्रीदेवता अनुक्रान्ताः ।
अथ किंदेवताः प्रयाजानुयाजाः । आग्नेया इत्येके २१

प्रयाजान्मे अनुयाजाँश्च केवलानूर्जस्वन्तं हविषो दत्त भागम् ।
घृतं चापां पुरुषं चौषधीनामग्नेश्च दीर्घमायुरस्तु देवाः ॥
तव प्रयाजा अनुयाजाश्च केवल ऊर्जस्वन्तो हविषः सन्तु भागाः ।
तवाग्ने यज्ञो ३ऽयमस्तु सर्वस्तुभ्यं नमन्तां प्रदिशश्चतस्रः ॥

आग्नेया वै प्रयाजा आग्नेया अनुयाजाः । इति च ब्राह्मणम् ।
छन्दोदेवता इत्यपरम् ।
छन्दांसि वै प्रयाजाश्छन्दाँस्यनुयाजाः । इति च ब्राह्मणम् ।
ऋतुदेवता इत्यपरम् ।
ऋतवो वै प्रयाजा ऋतवोऽनुयाजाः । इति च ब्राह्मणम् ।
पशुदेवता इत्यपरम् ।
पशवो वै प्रयाजाः पशवोऽनुयाजाः । इति च ब्राह्मणम् ।
प्राणदेवता इत्यपरम् ।
प्राणा वै प्रयाजाः प्राणा व अनुयाजाः । इति च ब्राह्मणम् ।
आत्मदेवता इत्यपरम् ।
आत्मा वै प्रयाजा आत्मा वा अनुयाजाः । इति च ब्राह्मणम् ।
आग्नेया इति तु स्थितिः । भक्तिमात्रमितरत् । किमर्थं
पुनरिदमुच्यते । यस्यै देवतायै हविर्गृहीतं स्यात् तां मनसा
ध्यायेद्वषट्करिष्यन् । इति ह विज्ञायते ।
इतीमान्येकादशाप्रीसूक्तानि । तेषां वासिष्ठमात्रेयं वाध्र्यश्वं
गार्त्समदमिति नाराशंसवन्ति । मैधातिथं दैर्घतमसं
प्रैषिकमित्युभयवन्ति । अतोऽन्यानि तनूनपात्वन्ति तनूनपात्वन्ति
२२

द्रविणोदाः कस्माद् द्रविणोदा द्रविणसो मेद्यन्तुतेऽथात आप्रियः
समिद्धो अद्यतनूनपान्नराशंसस्याजुह्वानः प्राचीनं

बर्हिर्व्यचस्वतीरासुष्वयन्ती दैव्या होतारा नो यज्ञं य इमे आविष्ट्यो वनस्पतिरुपावसृजाञ्जन्ति त्वा देवेभ्यो वनस्पते रशनया नियूय सद्योजातः प्रयाजान्मे द्वाविंशतिः ॥

इत्युत्तरषट्के द्वितीयोऽध्यायः

इति निरुक्तेऽष्टमोऽध्यायः समाप्तः

## अथ नवमोऽध्यायः

अथ यानि पृथिव्यायतनानि सत्त्वानि स्तुतिं लभन्ते तान्यतोऽनुक्रमिष्यामः । तेषामश्वः प्रथमागामी भवति । अश्वो व्याख्यातः । तस्यैषा भवति १

अश्वो वोळ्हा सुखं रथं हसनामुपमन्त्रिणः ।
शेपो रोमण्वन्तौ भेदौ वारिन्मण्डूक इच्छति इन्द्रायेन्दो परि स्रव ॥

अश्वो वोळ्हा । सुखं वोळ्हा रथं वोळ्हा । सुखमिति कल्याणनाम । कल्याणं पुण्यं सुहितं भवति । सुहितं गम्यतीति वा । हसैता वा पाता वा पालयिता वा । शेषमृच्छतीति । वारि वारयति ।
मा नो व्याख्यातः । तस्यैषा भवति २

मा नो मित्रो वरुणो अर्यमायुरिन्द्र ऋभुक्षा मरुतः परि ख्यन् ।
यद्वाजिनो देवजातस्य सप्तेः प्रवक्ष्यामो विदथे वीर्याणि ॥

यद्वाजिनो देवैर्जातस्य सप्तेः सरणस्य प्रवक्ष्यामो यज्ञे विदथे वीर्याणि । मा नस्त्वं मित्रश्च वरुणश्चार्यमा चायुश्च वायुरयन इन्द्रश्चोरुक्षयण ऋभूणां राजेति वा मरुतश्च परिख्यन् ।
शकुनिः शक्नोत्युन्नेतुमात्मानम् । शक्नोति नदितुमिति वा । शक्नोति तकितुमिति वा । सर्वतः शङ्करोऽस्त्विति वा । शक्नोतेर्वा । तस्यैषा भवति ३

कनिक्रदज्जनुषं प्र ब्रुवाण इयर्ति वाचमरितेव नावम् ।
सुमङ्गलश्च शकुने भवासि मा त्वा काचिदभिभा विश्व्या विदत् ॥

न्यक्रन्दीज्जन्म प्रब्रुवाणः । यथास्य शब्दस्तथा नामेरयति वाचम् । ईरयितेव नावम् । सुमङ्गलश्च शकुने भव । कल्याणमङ्गलः

। मङ्गलं गिरतेर्गृणात्यर्थे । गिरत्यनर्थानिति वा ।
अङ्गलमङ्गवत् । मज्जयति पापकमिति नैरुक्ताः । मां गच्छत्विति
वा । मा च त्वा काचिदभिभूतिः सर्वतो विदत् ।
गृत्समदमर्थमभ्युत्थितं कपिञ्जलोऽभिववाशे ।
तदभिवादिन्येषर्ग्भवति ४

भद्रं वद दक्षिणतो भद्रमुत्तरतो वद ।
भद्रं पुरस्तान्नो वद भद्रं पश्चात्कपिञ्जल ॥

इति सा निगदव्याख्याता ।
गृत्समदो गृत्समदनः । गृत्स इति मेधाविनाम । गृणातेः
स्तुतिकर्मणः ।
मण्डूका मज्जूका मज्जनात् । मदतेर्वा मोदतिकर्मणः । मन्दतेर्वा
तृप्तिकर्मणः । मण्डयतेरिति वैयाकरणाः । मण्ड एषामोक इति
वा । मण्डो मदेर्वा मुदेर्वा । तेषामेषा भवति ५

संवत्सरं शशयाना ब्राह्मणा व्रतचारिणः ।
वाचं पर्जन्यजिन्वितां प्र मण्डूका अवादिषुः ॥

संवत्सरं शिश्याना ब्राह्मणा व्रतचारिणोऽब्रुवाणाः । अपि
वोपमार्थे स्यात् । ब्राह्मणा इव व्रतचारिण इति । वाचं
पर्जन्यप्रीतां प्रावादिषुर्मण्डूकाः ।
वसिष्ठो वर्षकामः पर्जन्यं तुष्टाव । तं मण्डूका अन्वमोदन्त । स
मण्डूकाननुमोदमानान्दृष्ट्वा तुष्टाव । तदभिवादिन्येषर्ग्भवति ६

उप प्र वद मण्डूकि वर्षं मा वद तादुरि ।
मध्ये ह्रदस्य प्लवस्व विगृह्य चतुरः पदः ॥

इति सा निगदव्याख्याता ।

अक्षा अश्नुवत एनानिति वा । अभ्यश्नुवत एभिरिति वा ।
तेषामेषा भवति ७

प्रावेपा मा बृहतो मादयन्ति प्रवातेजा इरिणे वर्वृतानाः ।
सोमस्येव मौजवतस्य भक्षो विभीदको जागृविर्मह्यमच्छान् ॥

प्रवेपिणो मा महतो विभीदकस्य फलानि मादयन्ति । प्रवातेजाः
प्रवतेजाः ।
इरिणे वर्तमानाः । इरिणं निर्ऋणम् । ऋणातेः । अपार्णं भवति
। अपरता अस्मादोषधय इति वा । सोमस्येव मौजवतस्य भक्षः
। मौजवतो मूजवति जातः । मूजवान्पर्वतो मुञ्जवान् । मुञ्जो
विमुच्यत इषीकया । इषीकेषतेर्गतिकर्मणः ।
इयमपीतरेषीकैतस्मादेव । विभीदको विभेदनात् ।
जागृविर्जागरणात् । मह्यमचच्छदत् । प्रशंसत्येनान्प्रथमया ।
निन्दत्युत्तराभिः । ऋषेरक्षपरिद्यूनस्यैतदार्षं वेदयन्ते ।
ग्रावाणो हन्तेर्वा । गृणातेर्वा । गृह्णातेर्वा । तेषामेषा भवति ८

प्रैते वदन्तु प्र वयं वदाम ग्रावभ्यो वाचं वदता वदद्भ्यः ।
यदद्रयः पर्वताः साकमाशवः श्लोकं घोषं भरथेन्द्राय सोमिनः ॥

प्रवदन्त्वेते । प्रवदाम वयम् । ग्रावभ्यो वाचं वदत वदद्भ्यः ।
यदद्रयः पर्वता अदरणीयाः सह सोममाशवः क्षिप्रकारिणः ।
श्लोकः शृणोतेः । घोषो घुष्यतेः । सोमिनो यूयं स्थेति वा ।
सोमिनो गृहेष्विति वा ।
येन नराः प्रशस्यन्ते स नाराशंसो मन्त्रः ।
तस्यैषा भवति ९

अमन्दान्त्स्तोमान्प्र भरे मनीषा सिन्धावधि क्षियतो भाव्यस्य ।
यो मे सहस्रममिमीत सवानतूर्तो राजा श्रव इच्छमानः ॥

अमन्दान्त्स्तोमानबालिशाननल्पान्वा । बालो बलवर्ती भर्तव्यो भवति । अम्बास्मा अलं भवतीति वा । अम्बास्मै बलं भवतीति वा । बलो वा प्रतिषेधव्यवहितः । प्रभरे मनीषया मनस ईषया स्तुत्या प्रज्ञया वा । सिन्धावधि निवसतो भावयव्यस्य राज्ञः । यो मे सहस्रं निरमिमीत सवानतूर्तो राजातूर्ण इति वा । अत्वरमाण इति वा । प्रशंसामिच्छमानः १०

यज्ञसंयोगाद्राजा स्तुतिं लभेत । राजसंयोगाद् युद्धोपकरणानि । तेषां रथः प्रथमागामी भवति । रथो रंहतेर्गतिकर्मणः । स्थिरतेर्वा स्याद्विपरीतस्य । रममाणोऽस्मिंस्तिष्ठतीति वा । रपतेर्वा । तस्यैषा भवति ११

वनस्पते वीड्वङ्गो हि भूया अस्मत्सखा प्रतरणः सुवीरः ।
गोभिः सन्नद्धो असि वीळयस्वास्थाता ते जयतु जेत्वानि ॥

वनस्पते दृळ्हाङ्गो हि भव । अस्मत्सखा प्रतरणः सुवीरः कल्याणवीरः । गोभिः सन्नद्धो असि । वीळयस्वेति संस्तम्भस्व । आस्थाता ते जयतु जेतव्यानि ।
दुन्दुभिरिति शब्दानुकरणम् । द्रुमो भिन्न इति वा । दुन्दुभ्यतेर्वा स्याच्छब्दकर्मणः । तस्यैषा भवति १२

उप श्वासय पृथिवीमुत द्यां पुरुत्रा ते मनुतां विष्ठितं जगत् ।
स दुन्दुभे सजूरिन्द्रेण देवैर्दूराद्दवीयो अप सेध शत्रून् ॥

उपश्वासय पृथिवीं च दिवं च । वहुधा ते घोषं मन्यताम् । विष्ठितं स्थावरं जङ्गमं च यत् । स दुन्दुभे सहजोषण इन्द्रेण च देवैश्च । दूराद्दूरतरमपसेध शत्रून् । इषुधिरिषूणां निधानम् । तस्यैषा भवति १३

बह्वीनां पिता बहुरस्य पुत्रश्चिश्चा कृणोति समनावगत्य ।
इषुधिः सङ्काः पृतनाश्च सर्वाः पृष्ठे निनद्धो जयति प्रसूतः ॥

बह्वीनां पिता बहुरस्य पुत्र इतीषूनभिप्रेत्य । प्रस्मयत
इवापाव्रियमाणः । शब्दानुकरणं वा । सङ्काः सचतेः ।
संपूर्वाद्वा किरतेः । पृष्ठे निनद्धो जयति प्रसूत इति व्याख्यातम् ।
हस्तघ्नो हस्ते हन्यते । तस्यैषा भवति १४

अहिरिव भोगैः पर्येति बाहुं ज्याया हेतिं परिबाधमानः ।
हस्तघ्नो विश्वा वयुनानि विद्वान्पुमान्पुमांसं परि पातु विश्वतः ॥

अहिरिव भोगैः परिवेष्टयति बाहुम् । ज्याया वधात्परित्रायमाणः
। हस्तघ्नः सर्वाणि प्रज्ञानानि प्रजानन् । पुमान्पुरुमना भवति ।
पुंसतेर्वा ।
अभीशवो व्याख्याताः । तेषामेषा भवति १५

रथे तिष्ठन्नयति वाजिनः पुरो यत्र यत्र कामयते सुषारथिः ।
अभीशूनां महिमानं पनायत मनः पश्चादनु यच्छन्ति रश्मयः ॥

रथे तिष्ठन्नयति वाजिनः पुरस्तात्सतो यत्र यत्र कामयते ।
सुषारथिः कल्याणसारथिः । अभीशूनां महिमानं पूजयामि ।
मनः पश्चात्सन्तोऽनुयच्छन्ति रश्मयः ।
धनुर्धन्वतेर्गतिकर्मणः । वधकर्मणो वा । धन्वन्त्यस्मादिषवः ।
तस्यैषा भवति १६

धन्वना गा धन्वनाजिं जयेम धन्वना तीव्राः समदो जयेम ।
धनुः शत्रोरपकामं कृणोति धन्वना सर्वाः प्रदिशो जयेम ॥

इति सा निगदव्याख्याता समदः समदो वात्तेः । सम्मदो वा
मदतेः ।

ज्या जयतेर्वा । जिनातेर्वा । प्रजावयतीषूनिति वा । तस्या एषा भवति १७

वृक्ष्यन्तीवेदा गनीगन्ति कर्णं प्रियं सखायं परिषस्वजाना ।
योषेव शिङ्क्ते वितताधि धन्वञ्ज्या इयं समने पारयन्ती ॥

वक्ष्यन्तीवागच्छति कर्णं प्रियमिव सखायमिषुं परिष्वजमाना ।
योषे वशिङ्क्ते शब्दं करोति । वितताधि धनुषि ज्येयं समने संग्रामे पारयन्ती । इषुरीषतेर्गतिकर्मणः । वधकर्मणो वा । तस्यैषा भवति १८

सुपर्णं वस्ते मृगो अस्या दन्तो गोभिः सन्नद्धा पतति प्रसूता ।
यत्रा नरः सं च वि च द्रवन्ति तत्रास्मभ्यमिषवः शर्म यंसन् ॥

सुपर्णं वस्त इति वाजानभिप्रेत्य । मृगमयोऽस्या दन्तः ।
मृगयतेर्वा । गोभिः सन्नद्धा पतति प्रसूतेति व्याख्यातम् । यत्र नराः संद्रवन्ति च विद्रवन्ति च तत्रास्मभ्यमिषवः शर्म यच्छन्तु शरणं संग्रामेषु ।
अश्वाजनीं कशेत्याहुः । कशा प्रकाशयति भयमश्वाय ।
कृष्यतेर्वाणूभावात् । वाक्पुनः प्रकाशयत्यर्थान् । खशया ।
क्रोशतेर्वा । अश्वकशाया एषा भवति १९

आ जङ्घन्ति सान्वेषां जघनाँ उप जिघ्नते ।
अश्वाजनि प्रचेतसोऽश्वान्त्समत्सु चोदय ॥

आघ्नन्ति सानून्येषां सरणानि सक्थीनि । सक्थि सचतेः ।
आसक्तोऽस्मिन् कायः । जघनानि चोपघ्नति । जघनं जङ्घन्यतेः । अश्वाजनि प्रचेतसः प्रवृद्धचेतसोऽश्वान्त्समत्सु समरणेषु संग्रामेषु चोदय ।

उलूखलमुरुकरं वा । ऊर्ध्वखं वा । ऊर्क्करं वा ।
उरु मे कुरु । इत्यब्रवीत् ।
तदुलूखलमभवत् ।
उरुकरं वैतदुलूखलमित्याचक्षते परोक्षेण । इति च ब्राह्मणम् ।
तस्यैषा भवति २०

यच्चिद्धि त्वं गृहेगृह उलूखलक युज्यसे ।
इह द्युमत्तमं वद जयतामिव दुन्दुभिः ॥

इति सा निगदव्याख्याता २१

वृषभः प्रजां वर्षतीति वा । अतिबृहति रेत इति वा । तद्वर्षकर्मा वर्षणाद्वृषभः । तस्यैषा भवति २२

न्यक्रन्दयन्नुपयन्त एनममेहयन्वृषभं मध्य आजेः ।
तेन सूभर्वं शतवत्सहस्रं गवां मुद्गलः प्रधने जिगाय ॥

न्यक्रन्दयन्नुपयन्त इति व्याख्यातम् । अमेहयन्वृषभं मध्ये ।
आजयनस्याजवनस्येति वा । तेन सूभर्वं राजानम् ।
भर्वतिरत्तिकर्मा । तद्वा सूभर्वं सहस्रं गवां मुद्गलः प्रधने जिगाय
। प्रधन इति सङ्ग्रामनाम । प्रकीर्णान्यस्मिन् धनानि भवन्ति ।
द्रुघणो द्रुममयो घनः । तत्रेतिहासमाचक्षते । मुद्गलो भार्म्यश्व
ऋषिर्वृषभं च द्रुघणं च युक्त्वा सङ्ग्रामे व्यवहृत्याजिं जिगाय ।
तदभिवादिन्येषर्ग्भवति २३

इमं तं पश्य वृषभस्य युञ्जं काष्ठाया मध्ये द्रुघणं शयानम् ।
येन जिगाय शतवत्सहस्रं गवां मुद्गलः पृतनाज्येषु ॥

इमं तं पश्य वृषभस्य सहयुजं काष्ठाया मध्ये द्रुघणं शयानम् ।
येन जिगाय शतवत्सहस्रं गवां मुद्गलः पृतनाज्येषु ।

पृतनाज्यमिति सङ्ग्रामनाम । पृतनानामजनाद्वा । जयनाद्वा ।
मुद्गलो मुद्गवान् । मुद्गगिलो वा । मदनं गिलतीति वा ।
मदंगिलो वा । मुदंगिलो वा । भार्म्यश्वो भृम्यश्वस्य पुत्रः ।
भृम्यश्वो भृमयोऽस्याश्वाः । अश्वभरणाद्वा ।
पितुरित्यन्ननाम । पातेर्वा । पिबतेर्वा । प्यायतेर्वा । तस्यैषा
भवति २४

पितुं नु स्तोषं महो धर्माणं तविषीम् ।
यस्य त्रितो व्योजसा वृत्रं विपर्वमर्दयत् ॥

तं पितुं स्तौमि महतो धारयितारं बलस्य । तविषीति बलनाम ।
तवतेः वा वृद्धिकर्मणः । यस्य त्रित ओजसा बलेन ।
त्रितस्त्रिस्थान इन्द्रो वृत्रं विपर्वाणं व्यर्दयति ।
नद्यो व्याख्याताः । तासामेषा भवति २५

इमं मे गङ्गे यमुने सरस्वति शुतुद्रि स्तोमं सचता परुष्ण्या ।
असिक्न्या मरुद्वृधे वितस्तयार्जीकीये शृणुह्या सुषोमया ॥

इमं मे गङ्गे यमुने सरस्वति शुतुद्रि परुष्णि स्तोममासेवध्वम् ।
असिक्न्या च सह मरुद्वृधे वितस्तया चार्जीकीय आशृणुहि सुषोमया
चेति समस्तार्थः । अथैकपदनिरुक्तम् । गङ्गा गमनात् ।
यमुना प्रयुवती गच्छतीति वा । प्रवियुतं गच्छतीति वा ।
सरस्वती । सर इत्युदकनाम । सर्तेः । तद्वती । शुतुद्री
शुद्राविणी । क्षिप्रद्राविणी । आशु तुन्नेव द्रवतीति वा ।
इरावतीं परुष्णीत्याहुः । पर्ववती कुटिलगामिनी ।
असिक्न्यशुक्लासिता । सितमिति वर्णनाम ।
तत्प्रतिषेधोऽसितम् । मरुद्वृधाः सर्वा नद्यो मरुत एना वर्धयन्ति ।
वितस्ताविदग्धा विवृद्धा महाकूला । आर्जीकीयां विपाडित्याहुः

। ऋजीकप्रभवा वा । ऋजुगामिनी वा । विपाड् विपाटनाद्वा । विपाशनाद्वा । विप्रापणाद्वा । पाशा अस्यां व्यपाश्यन्त वसिष्ठस्य मुमूर्षतः । तस्माद्विपाडुच्यते । पूर्वमासीदुरुञ्जिरा । सुषोमा सिन्धुः । यदेनामभिप्रसुवन्ति नद्यः । सिन्धुः स्यन्दनात् । आप आप्नोतेः । तासामेषा भवति २६

आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन ।
महे रणाय चक्षसे ॥

आपो हि स्थ सुखभुवस्ता नोऽन्नाय धत्त । महते च नो रणाय रमणीयाय च दर्शनाय ।
ओषधय ओषद्धयन्तीति वा । ओषत्येना धयन्तीति वा । दोषं धयन्तीति वा । तासामेषा भवति २७

या ओषधीः पूर्वा जाता देवेभ्यस्त्रियुगं पुरा ।
मनै नु बभ्रूणामहं शतं धामानि सप्त च ॥

या ओषधयः पूर्वा जाता देवेभ्यस्त्रीणि युगानि पुरा मन्ये नु तद्बभ्रूणामहं बभ्रुवर्णानां हरणानां भरणानामिति वा । शतं धामानि सप्त च । धामानि त्रयाणि भवन्ति । स्थानानि । नामानि । जन्मानीति । जन्मान्यत्राभिप्रेतानि । सप्तशतं पुरुषस्य मर्मणां तेष्वेना दधतीति वा ।
रात्रिर्व्याख्याता । तस्या एषा भवति २८

आ रात्रि पार्थिवं रजः पितुरप्रायि धामभिः ।
दिवः सदांसि बृहती वि तिष्ठस आ त्वेषं वर्तते तमः ॥
आपूपुरस्त्वं रात्रि पाथिवं रजः । स्थानैर्मध्यमस्य । दिवः सदांसि । बृहती महती वितिष्ठस आवर्तते त्वेषं तमो रजः । अरण्यान्यरण्यस्य पत्नी । अरण्यमपार्णम् । ग्रामादरमणं

भवतीति वा । तस्या एषा भवति २९

अरण्यान्यरण्यान्यसौ या प्रेव नश्यसि ।
कथा ग्रामं न पृच्छसि न त्वा भीरिव विन्दती ३ँ ॥

अरण्यानीत्येनामामन्त्रयते । यासावरण्यानि वनानि पराचीव नश्यसि कथं ग्रामं न पृच्छसि । न त्वा भीर्विन्दतीवेति । इवः परिभयार्थे वा ।
श्रद्धा श्रद्धानात् । तस्या एषा भवति ३०

श्रद्धयाग्निः समिध्यते श्रद्धया हूयते हविः ।
श्रद्धां भगस्य मूर्धनि वचसा वेदयामसि ॥

श्रद्धयाग्निः साधु समिध्यते । श्रद्धया हविः साधु हूयते । श्रद्धां भगस्य भागधेयस्य मूर्धनि प्रधानाङ्गे वचनेनावेदयामः ।
पृथिवी व्याख्याता । तस्या एषा भवति ३१

स्योना पृथिवि भवानृक्षरा निवेशनी ।
यच्छा नः शर्म सप्रथः ॥

सुखा नः पृथिवि भव । अनृक्षरा निवेशनी । ऋक्षरः कण्टक ऋच्छतेः । कण्टकः कन्तपो वा । कृन्ततेर्वा । कण्टतेर्वा स्याद्गतिकर्मणः । उद्गततमो भवति । यच्छ नः शर्म । यच्छन्तु शरणं सर्वतः पृथु ।
अप्वा व्याख्याता । तस्या एषा भवति ३२

अमीषां चित्तं प्रतिलोभयन्ती गृहाणाङ्गान्यप्वे परेहि ।
अभि प्रेहि निर्दह हृत्सु शोकैरन्धेनामित्रास्तमसा सचन्ताम् ॥

अमीषां चित्तानि प्रज्ञानानि प्रतिलोभयमाना गृहाणाङ्गान्यप्वे परेहि

। अभिप्रेहि । निर्दहैषां हृदयानि शोकैः । अन्धेनामित्रास्तमसा संसेव्यन्ताम् ।
अग्नाय्यग्नेः पत्नी । तस्या एषा भवति ३३

इहेन्द्राणीमुप ह्वये वरुणानीं स्वस्तये ।
अग्नायीं सोमपीतये ॥

इति सा निगदव्याख्याता ३४

अथातोऽष्टौ द्वन्द्वानिः । उलूखलमुसले । उलूखलं व्याख्यातम् । मुसलं मुहुः सरम् । तयोरेषा भवति ३५

आयजी वाजसातमा ता ह्यु १ च्चा विजर्भृतः ।
हरी इवान्धांसि बप्सता ॥

आयष्टव्ये अन्नानां संभक्ततमे ते ह्युच्चैर्विह्रियेते हरी इवान्नानि भुञ्जाने ।
हविर्धाने हविषां निधाने । तयोरेषा भवति ३६

आ वामुपस्थमद्रुहा देवाः सीदन्तु यज्ञियाः ।
इहाद्य सोमपीतये ॥

आसीदन्तु वामुपस्थमुपस्थानम् अद्रोग्धव्ये इति वा यज्ञिया देवा यज्ञसंपादिन इहाद्य सोमपानाय ।
द्यावापृथिव्यौ व्याख्याते । तयोरेषा भवति ३७

द्यावा नः पृथिवी इमं सिध्रमद्य दिविस्पृशम् ।
यज्ञं देवेषु यच्छताम् ॥

द्यावापृथिव्यौ न इमं साधनमद्य दिविस्पृशं यज्ञं देवेषु नियच्छताम्
विपाट्छुतुद्र्यौ व्याख्याते । तयोरेषा भवति ३८

प्र पर्वतानामुशती उपस्थादश्वे इव विषिते हासमाने ।

गावेव शुभ्रे मातरा रिहाणे विपाट्छुतुद्री पयसा जवेते ॥

पर्वतानामुपस्थादुपस्थानात् । उशत्यौ कामयमाने । अश्वे इव विमुक्ते इति वा । विषण्णे इति वा । हासमाने । हासतिः स्पर्धायां । हर्षमाणे वा । गावाविव शोभने मातरौ संरिहाणे । विपाट्छुतुद्री पयसा प्रजवेते ।
आर्त्नी अर्तन्यौ वा । अरण्यौ वा । अरिषण्यौ वा ।
तयोरेषा भवति ३९

ते आचरन्ती समनेव योषा मातेव पुत्रं बिभृतामुपस्थे ।
अप शत्रून्विध्यतां संविदाने आर्त्नी इमे विष्फुरन्ती अमित्रान् ॥

ते आचरन्त्यौ समनसाविव योषे मातेव पुत्रं बिभृतामुपस्थ उपस्थाने । अपविध्यतां शत्रून्त्संविदाने आत्नर्याविमे विघ्नत्यावमित्रान् ।
शुनासीरौ । शुनो वायुः । शु एत्यन्तरिक्षे । सीर आदित्यः सरणात् । तयोरेषा भवति ४०

शुनासीराविमां वाचं जुषेथां यद्दिवि चक्रथुः पयः ।
तेनेमामुप सिञ्चतम् ॥

इति सा निगदव्याख्याता ।
देवी जोष्ट्री देव्यौ जोषयित्र्यौ । द्यावापृथिव्यावितिवा ।
अहोरात्रे इति वा । सस्यं च समा चेति कात्थक्यः । तयोरेष संप्रैषो भवति ४१

देवी जोष्ट्री वसुधीती ययोरन्याघा द्वेषांसि यूयवदान्यावक्षद्वसु वार्याणि यजमानाय वसुवने वसुधेयस्य वीतां यज ॥

देवी जोष्ट्री । देव्यौ जोषयित्र्यौ । वसुधान्यौ । ययोरन्याघानि द्वेषांस्यवयावयत्यावहत्यन्या वसूनि वननीयानि यजमानाय ।

वसुवननाय च । वसुधानाय च । वीतां पिबेतां कामयेतां वा । यजेति संप्रैषः ।
देवी ऊर्जाहुती । देव्या ऊर्जाह्वान्यौ । द्यावापृथिव्याविति वा । अहोरात्र इति वा । सस्यं च समा चेति कात्थक्यः । तयोरेष संप्रैषो भवति ४२

देवी ऊर्जाहुती इषमूर्जमन्या वक्षत्सग्धिं सपीतिमन्या नवेन पूर्वं दयमानाः स्याम पुराणेन नवं तामूर्जमूर्जाहुती ऊर्जयमाने अधातां वसुवने वसुधेयस्य वीतां यज ॥

देवी ऊर्जाहुती । देव्या ऊर्जाह्वान्यौ । अन्नं च रसं चावहति अन्या । सहजग्धिं च सहपीतिं चान्या । नवेन पूर्वं दयमानाः स्याम । पुराणेन नवम् । तामूर्जमूर्जाहुती ऊर्जयमाने अधाताम् । वसुवननाय च । वसुधानाय च । वीतां पिबेतां कामयेतां वा । यजेति संप्रैषो यजेति संप्रैषः ४३

अथ यान्यश्वो वोळ्हा मा नो मित्रः कनिक्रदद् भद्रं वद संवत्सरमुप प्र वद प्रावेपा मा प्रैते वदन्त्वमन्दान्यज्ञसंयोगाद्वनस्पत उप श्वासय बह्वीनामहिरिव भोगै रथे तिष्ठन्धन्वना गा वक्ष्यन्तीवेदा सुपर्णं वस्त आ जङ्घन्ति यच्चिद्धि त्वं वृषभो न्यक्रन्दयन्निमं तं पितुं न्विमं म आपोहिष्ठा या ओषधीरा रात्र्यरण्यानि श्रद्धयाग्निः स्योनामीषां चित्तमिहेन्द्राण्यथातोऽष्टावायज्या वां द्यावा नः प्र पर्वतानां ते आचरन्ती शुनासीरौ देवी जोष्ट्री देवी ऊर्जाहुती त्रिचत्वारिंशत् ॥

इत्युत्तरषट्के तृतीयोऽध्यायः

इति निरुक्ते नवमोऽध्यायः

## अथ दशमोऽध्यायः

अथातो मध्यस्थाना देवताः ।
तासां वायुः प्रथमागामी भवति । वायुर्वातेः । वेतेर्वा स्याद्गतिकर्मणः । एतेरिति स्थौलाष्ठीविः । अनर्थको वकारः । तस्यैषा भवति १

वायवा याहि दर्शतेमे सोमा अरंकृताः ।
तेषां पाहि श्रुधी हवम् ॥

वायवायाहि दर्शनीयेमे सोमा अरङ्कृता । तेषां पिब शृणु नो ह्वानमिति । कमन्यं मध्यमादेवमवक्ष्यत् ।
तस्यैषापरा भवति २

आसस्राणासः शवसानमच्छेन्द्रं सुचक्रे रथ्यासो अश्वाः ।
अभि श्रव ऋज्यन्तो वहेयुर्नू चिन्नु वायोरमृतं वि दस्येत् ॥

आससृवांसः । अभिबलायमानमिन्द्रम् । कल्याणचक्रे रथे योगाय । रथ्या अश्वा रथस्य वोढारः । ऋज्यन्त ऋजुगामिनोऽन्नमभिवहेयुः । नवं च पुराणं च । श्रव इत्यन्ननाम । श्रूयत इति सतः । वायोश्चास्य भक्षो यथा न विदस्येदिति । इन्द्रप्रधानेत्येके नैघण्टुकं वायुकर्म । उभयप्रधानेत्यपरम् ।
वरुणो वृणोतीति सतः । तस्यैषा भवति ३

नीचीनबारं वरुणः कबन्धं प्र ससर्ज रोदसी अन्तरिक्षम् ।
तेन विश्वस्य भुवनस्य राजा यवं न वृष्टिर्व्युनत्ति भूम ॥

नीचीनद्वारं वरुणः । कबन्धं मेघम् । कवनमुदकं भवति । तदस्मिन्धीयते । उदकमपि कबन्धमुच्यते । बन्धिरनिभृतत्वे । कमनिभृतं च । प्रसृजति । द्यावापृथिव्यौ चान्तरिक्षं च महत्त्वेन

। तेन सर्वस्य भुवनस्य राजा यवमिव वृष्टिर्व्युनत्ति भूमिम् ।
तस्यैषापरा भवति ४

तमू षु समना गिरा पितॄणां च मन्मभिः ।
नाभाकस्य प्रशस्तिभिर्यः सिन्धूनामुपोदये सप्तस्वसा स मध्यमो
नभन्तामन्यके समे ॥

तं सभिष्टौमि समानया गिरा गीत्या स्तुत्या । पितॄणां च मननीयैः
स्तोमैः । नाभाकस्य प्रशस्तिभिः । ऋषिर्नाभाको बभूव । यः
स्यन्दमानानामासामुपोदये सप्तस्वसारमेनमाह वाग्भिः स मध्यम
इति निरुच्यते । अथैष एव भवति । नभन्तामन्यके समे । मा
भूवन्नन्यके सर्वे ये नो द्विषन्ति दुर्धियः पापधियः पापसंकल्पाः ।
रुद्रो रौतीति सतः । रोरूयमाणो द्रवतीति वा । रोदयतेर्वा ।
यदरुदत्तद्रुद्रस्य रुद्रत्वम् । इति काठकम् ।
यदरोदीत्तद्रुद्रस्य रुद्रत्वम् । इति हारिद्रविकम् ।
तस्यैषा भवति ५

इमा रुद्राय स्थिरधन्वने गिरः क्षिप्रेषवे देवाय स्वधाव्ने ।
अषाळ्हाय सहमानाय वेधसे तिग्मायुधाय भरता शृणोतु नः ॥

इमा रुद्राय । दृढधन्वने । गिरः क्षिप्रेषवे । देवाय । अन्नवते
। अषाळ्हायान्यैः । सहमानाय । विधात्रे । तिग्मायुधाय ।
भरत । शृणोतु नः । तिग्मं तेजतेः । उत्साहकर्मणः ।
आयुधमायोधनात् ।
तस्यैषापरा भवति ६

या ते दिद्युदवसृष्टा दिवस्परि क्ष्मया चरति परि सा वृणक्तु नः ।
सहस्रं ते स्वपिवात भेषजा मा नस्तोकेषु तनयेषु रीरिषः ॥

या ते दिद्युदवसृष्टा । दिवस्परि दिवोऽधि । दिद्युद् द्युतेर्वा ।
क्ष्मया चरति । क्ष्मा पृथिवी । तस्यां चरति । तया चरति ।
विक्ष्मापयन्ती चरतीति वा । परिवृणक्तु नः सा । सहस्रं ते
स्वाप्तवचन भैषज्यानि । मा नस्त्वं पुत्रेषु पौत्रेषु च रीरिषः ।
तोकं तुद्यतेः । तनयं तनोतेः ।
अग्निरपि रुद्र उच्यते । तस्यैषा भवति ७

जराबोध तद्विविड्ढि विशेविशे यज्ञियाय ।
स्तोमं रुद्राय दृशीकम् ॥

जरा स्तुतिः । जरतेः स्तुतिकर्मणः । तां बोध । तया
बोधयितरिति वा । तद्विविड्ढि । तत्कुरु । मनुष्यस्य मनुष्यस्य
यजनाय । स्तोमं रुद्राय दर्शनीयम् ।
इन्द्र इरां दृणातीति वा । इरां ददातीति वा । इरां दधातीति वा
। इरां दारयत इति वा । इरां धारयत इति वा । इन्दवे
द्रवतीति वा । इन्दौ रमत इति वा । इन्धे भूतानीति वा ।
तद्यदेनं प्राणैः समैन्धंस्तदिन्द्रस्येन्द्रत्वम् । इति विज्ञायते ।
इदं करणादित्याग्रयणः । इदं दर्शनादित्यौपमन्यवः ।
इन्दतेर्वैश्वर्यकर्मणः । इन्दञ्छत्रूणां दारयिता वा । द्रावयिता वा
। आदरयिता च यज्वनाम् । तस्यैषा भवति ८

अदर्दरुत्समसृजो वि खानि त्वमर्णवान्बद्बधानाँ अरम्णाः ।
महान्तमिन्द्र पर्वतं वि यद्वः सृजो वि धारा अव दानवं हन् ॥

अदृणा उत्सम् । उत्सरणाद्वा । उत्सदनाद्वा । उत्स्यन्दनाद्वा ।
उनत्तेर्वा । व्यसृजोऽस्य खानि । त्वमर्णवानर्णस्वतः ।
एतान्माध्यमिकान्त्संस्त्यायान् । बाबध्यमानानरम्णाः । रम्णातिः
संयमनकर्मा । विसर्जनकर्मा वा । महान्तमिन्द्र पर्वतं मेघं

यद्व्यवृणोः । व्यसृजोऽस्य धाराः । अवाहन्नेनं दानकर्माणम् ।
तस्यैषापरा भवति ९

यो जात एव प्रथमो मनस्वान्देवो देवान्क्रतुना पर्यभूषत् ।
यस्य शुष्माद्रोदसी अभ्यसेतां नृम्णस्य मह्ना स जनास इन्द्रः ॥

यो जात एव प्रथमो मन्स्वी देवो देवान् । क्रतुना कर्मणा ।
पर्यभवत्पर्यगृह्णात्पर्यरक्षदत्यक्रामदिति वा । यस्य बलाद्
द्यावापृथिव्यावप्यबिभीतां नृम्णस्य मह्ना बलस्य महत्त्वेन । स
जनास इन्द्र इति ।
ऋषेर्दृष्टार्थस्य प्रीतिर्भवत्याख्यानसंयुक्ता ।
पर्जन्यस्तृपेः । आद्यन्तविपरीतस्य । तर्पयिता जन्यः । परो
जेता वा । परो जनयिता वा । प्रार्जयिता वा रसानाम् ।
तस्यैषा भवति १०

वि वृक्षान्हन्त्युत हन्ति रक्षसो विश्वं बिभाय भुवनं महावधात् ।
उतानागा ईषते वृष्ण्यावतो यत्पर्जन्यः स्तनयन्हन्ति दुष्कृतः ॥

विहन्ति वृक्षान् । विहन्ति च रक्षांसि । सर्वाणि चास्माद्भूतानि
बिभ्यति महावधात् । महान्ह्यस्य वधः । अप्यनपराधो भीतः
पलायते वर्षकर्मवतो यत्पर्जन्यः स्तनयन्हन्ति दुष्कृतः पापकृतः ।
बृहस्पतिर्बृहतः पाता वा । पालयिता वा । तस्यैषा भवति ११

अश्नापिनद्धं मधु पर्यपश्यन्मत्स्यं न दीन उदनि क्षियन्तम् ।
निष्टज्जभार चमसं न वृक्षाद्बृहस्पतिर्विरवेणा विकृत्य ॥

अशनवता मेघेनापिनद्धं मधु पर्यपश्यत् । मत्स्यमिव दीन उदके
निवसन्तम् । निर्जहार तच्चमसमिव वृक्षात् । चमसः कस्मात्
। चमन्त्यस्मिन्निति । बृहस्पतिर्विरवेण शब्देन विकृत्य ।

ब्रह्मणस्पतिर्ब्रह्मणः पाता वा । पालयिता वा । तस्यैषा भवति
१२

अश्मास्यमवतं ब्रह्मणस्पतिर्मधुधारमभि यमोजसातृणत् ।
तमेव विश्वे पपिरे स्वर्दृशो बहु साकं सिसिचुरुत्समुद्रिणम् ॥

अशनवन्तमास्यन्दनवन्तम् । अवातितं ब्रह्मणस्पतिर्मधुधारम् ।
अभि यमोजसा बलेनाभ्यतृणत्तमेव सर्वे पिबन्ति रश्मयः सूर्यदृशः
। बह्वेनं सह सिञ्चन्त्युत्समुद्रिणमुदकवन्तम् १३

क्षेत्रस्य पतिः । क्षेत्रं क्षियतेर्निवासकर्मणः । तस्य पाता वा
पालयिता वा । तस्यैषा भवति १४

क्षेत्रस्य पतिना वयं हितेनेव जयामसि ।
गामश्वं पोषयित्न्वा स नो मृळातीदृशे ॥

क्षेत्रस्य पतिना वयं सुहितेनेव जयामः । गामश्वं पुष्टं पोषयितृ
चाहरेति । स नो मृळातीदृशे । बलेन वा धनेन वा ।
मृळतिर्दानकर्मा । तस्यैषापरा भवति १५

क्षेत्रस्य पते मधुमन्तमूर्मिं धेनुरिव पयो अस्मासु धुक्ष्व ।
मधुश्चुतं घृतमिव सुपूतमृतस्य नः पतयो मृळयन्तु ॥

क्षेत्रस्य पते मधुमन्तमूर्मिं धेनुरिव पयोऽस्मासु धुक्ष्वेति । मधुश्चुतं
घृतमिवोदकं सुपूतम् । ऋतस्य नः पातारो वा पालयितारो वा
मृळयन्तु । मृळयतिरुपदयाकर्मा । पूजाकर्मा वा ।
तद्यत्समान्यामृचि समानाभिव्याहारं भवति तज्जामि भवतीत्येकम् ।
मधुमन्तं मधुश्चुतमिति यथा । यदेव समाने पादे समानाभिव्याहारं
भवति तज्जामि भवतीत्यपरम् ।
हिरण्यरूपः स हिरण्यसंदृग् । इति यथा ।

यथा कथा च विशेषोऽजामि भवतीत्यपरम् ।

मुण्डूका इवोदकान्मुण्डूका उदकादिव । इति यथा ।

वास्तोष्पतिः । वास्तुर्वसतेर्निवासकर्मणः । तस्य पाता वा पालयिता वा । तस्यैषा भवति १६

अमीवहा वास्तोष्पते विश्वा रूपाण्याविशन् ।
सखा सुशेव एधि नः ॥

अभ्यमनहा वास्तोष्पते सर्वाणि रूपान्याविशन्त्सखा नः सुसुखो भव । शेव इति सुखनाम । शिष्यतेः । वकारो नामकरणः । अन्तस्थान्तरोपलिङ्गी । विभाषितगुणः । शिवमित्यप्यस्य भवति । यद्यद्रूपं कामयते तत्तद्देवता भवति ।

रूपं रूपं मघवा बोभवीति । इत्यपि निगमो भवति ।

वाचस्पतिर्वाचः पाता वा पालयिता वा । तस्यैषा भवति १७

पुनरेहि वाचस्पते देवेन मनसा सह ।
वसोष्पते नि रामय मय्येव तन्वं १ मम ॥

इति सा निगदव्याख्याता ।
अपां नपात्तनूनप्त्रा व्याख्यातः । तस्यैषा भवति १८

यो अनिध्मो दीदयदप्स्व १ न्तर्यं विप्रास ईळते अध्वरेषु ।
अपां नपान्मधुमतीरपो दा याभिरिन्द्रो वावृधे वीर्याय ॥

योऽनिध्मो दीप्यतेऽभ्यन्तरमप्सु यं मेधाविनः स्तुवन्ति यज्ञेषु सोऽपांनपान्मधुमतीरपो देह्यभिषवाय । याभिरिन्द्रो वर्धते । वीर्याय वीरकर्मणे । यमो यच्छतीति सतः । तस्यैषा भवति १९

परेयिवांसं प्रवतो महीरनु बहुभ्यः पन्थामनुपस्पशानम् ।
वैवस्वतं संगमनं जनानां यमं राजानं हविषा दुवस्य ॥

परेयिवांसं पर्यागतवन्तम् । प्रवत उद्वतो निवत इति ।
अवतिर्गतिकर्मा । बहुभ्यः पन्थानमनुपस्पाशयमानम् ।
वैवस्वतम् । संगमनं जनानाम् । यमं राजानं हविषा दुवस्येति
। दुवस्यतिराप्नोतिकर्मा ।
अग्निरपि यम उच्यते । तमेता ऋचोऽनुप्रवदन्ति २०

सेनेव सृष्टामं दधात्यस्तुर्न दिद्युत्त्वेषप्रतीका ॥
यमो ह जातो यमो जनित्वं जारः कनीनां पतिर्जनीनाम् ॥
तं वश्चराथा वयं वसत्यास्तं न गावो नक्षन्त इद्धम् ॥

इति द्विपदाः । सेनेव सृष्टा भयं वा बलं वा दधाति । अस्तुरिव
दिद्युत्त्वेषप्रतीका । भयप्रतीका । बलप्रतीका यशःप्रतीका
महाप्रतीका दीप्तप्रतीका वा ।

यमो ह जात इन्द्रेण सह संगतः ।
यमाविहेह मातरा ॥

इत्यपि निगमो भवति ।
यम इव जातः । यमो जनिष्यमाणः । जारः कनीनाम् ।
जरयिता कन्यानाम् । पतिर्जनीनाम् । पालयिता जायानाम् ।
तत्प्रधाना हि यज्ञसंयोगेन भवन्ति ।

तृतीयो अग्निष्टे पतिः । इत्यपि निगमो भवति ।

तं वः । चराथा चरन्त्या । पश्वाहुत्या । वसत्या च ।
निवसन्त्या । औषधाहुत्या । अस्तं यथा गाव आप्नुवन्ति
तथाप्नुयाम । इद्धं समृद्धं भोगैः ।

मित्रः प्रमीतेः । त्रायते । संमिन्वानो द्रवतीति वा । मेदयतेर्वा । तस्यैषा भवति २१

मित्रो जनान्यातयति ब्रुवाणो मित्रो दाधार पृथिवीमुत द्याम् ।
मित्रः कृष्टीरनिमिषाभि चष्टे मित्राय हव्यं घृतवज्जुहोत ॥

मित्रो जनानायातयति प्रब्रुवाणः शब्दं कुर्वन् । मित्र एव धारयति पृथिवीं च दिवं च । मित्रं कृष्टीरनिमिषन्नभिविपश्यतीति । कृष्टय इति मनुष्यनाम । कर्मवन्तो भवन्ति । विकृष्टदेहा वा । मित्राय हव्यं घृतवज्जुहोतेति व्याख्यातम् । जुहोतिर्दानकर्मा । कः कमनो वा । क्रमणो वा । सुखो वा । तस्यैषा भवति २२

हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् ।
स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥

हिरण्यगर्भो हिरण्यमयो गर्भः । हिरण्यमयो गर्भोऽस्येति वा । गर्भो गृभेः । गृणात्यर्थे । गिरत्यनर्थानिति वा । यदा हि स्त्री गुणान्गृह्णाति गुणाश्चास्या गृह्यन्तेऽथ गर्भो भवति । समभवदग्रे भूतस्य जातः पतिरेको बभूव । स धारयति पृथिवीं च दिवं च । कस्मै देवाय हविषा विधेमेति व्याख्यातम् । विधतिर्दानकर्मा । सरस्वान्व्याख्यातः । तस्यैषा भवति २३

ये ते सरस्व ऊर्मयो मधुमन्तो घृतश्चुतः ।
तेभिर्नोऽविता भव ॥

इति सा निगदव्याख्याता २४

विश्वकर्मा सर्वस्य कर्ता । तस्यैषा भवति २५

विश्वकर्मा विमना आद्विहाया धाता विधाता परमोत संदृक् ।
तेषामिष्टानि समिषा मदन्ति यत्रा सप्तऋषीन्पर एकमाहुः ॥

विश्वकर्मा विभूतमना व्याप्ता धाता च । विधाता च । परमश्च संद्रष्टा भूतानाम् । तेषामिष्टानि वा कान्तानि वा क्रान्तानि वा गतानि वा मतानि वा नतानि वा । अद्भिः सह संमोदन्ते यत्रैतानि सप्तऋषीणानि ज्योतींषि । तेभ्यः पर आदित्यः । तान्येतस्मिन्नेकं भवन्तीत्यधिदैवतम् ।
अथाध्यात्मम् । विश्वकर्मा विभूतमना व्याप्ता धाता च । विधाता च । परमश्च संदर्शयितेन्द्रियाणाम् । एषामिष्टानि वा कान्तानि वा क्रान्तानि वा गतानि वा मतानि वा नतानि वा । अन्नेन सह संमोदन्ते यत्रेमानि सप्तऋषीणानीन्द्रियाणि । एभ्यः पर आत्मा । तान्यस्मिन्नेकं भवन्तीत्यात्मगतिमाचष्टे ।
तत्रेतिहासमाचक्षते । विश्वकर्मा भौवनः सर्वमेधे सर्वाणि भूतानि जुहवाञ्चकार । स आत्मानमप्यन्ततो जुहवाञ्चकार ।
तदभिवादिन्येषर्ग्भवति ।

य इमा विश्वा भुवनानि जुह्वत् । इति ।

तस्योत्तरा भूयसे निर्वचनाय २६

विश्वकर्मन्हविषा वावृधानः स्वयं यजस्व पृथिवीमुत द्याम् ।
मुह्यन्त्वन्ये अभितो जनास इहास्माकं मघवा सूरिरस्तु ॥

विश्वकर्मन्हविषा वर्धयमानः स्वयं यजस्व पृथिवीं च दिवं च ।
मुह्यन्त्वन्ये अभितो जनाः सपत्नाः । इहास्माकं मघवा सूरिरस्तु प्रज्ञाता ।
तार्क्ष्यस्त्वष्ट्रा व्याख्यातः । तीर्णेऽन्तरिक्षे क्षियति । तूर्णमर्थं रक्षति । अश्नोतेर्वा । तस्यैषा भवति २७

त्यमू षु वाजिनं देवजूतं सहावानं तरुतारं रथानाम् ।
अरिष्टनेमिं पृतनाजमाशुं स्वस्तये तार्क्ष्यमिहा हुवेम ॥

तं भृशमन्नवन्तम् । जूतिर्गतिः । प्रीतिर्वा । देवजूतं देवगतं देवप्रीतं वा ।
सहस्वन्तं तारयितारं रथानामरिष्टनेमिं पृतनाजितम् । आशुं स्वस्तये तार्क्ष्यमिह ह्वयेमेति ।
कमन्यं मध्यमादेवमवक्ष्यत् ।
तस्यैषापरा भवति २८

सद्यश्चिद्यः शवसा पञ्च कृष्टीः सूर्य इव ज्योतिषापस्ततान ।
सहस्रसाः शतसा अस्य रंहिर्न स्मा वरन्ते युवतिं न शर्याम् ॥

सद्योऽपि यः शवसा बलेन तनोत्यपः सूर्य इव ज्योतिषा पञ्च मनुष्यजातानि । सहस्रसानिनी शतसानिन्यस्य सा गतिः । न स्मैनां वारयन्ति प्रयुवतीमिव शरमयीमिषुम् ।
मन्युर्मन्यतेः । दीप्तिकर्मणः । क्रोधकर्मणः वा ।
मन्यन्त्यस्मादिषवः ।
तस्यैषा भवति २९

त्वया मन्यो सरथमारुजन्तो हर्षमाणासोऽधृषिता मरुत्वः ।
तिग्मेषव आयुधा संशिशाना अभि प्र यन्तु नरो अग्निरूपाः ॥

त्वया मन्यो सरथमारुह्य रुजन्तो हर्षमाणासोऽधृषिता मरुत्वस्तिग्मेषव आयुधानि संशिश्यमाना अभिप्रयन्तु नरः ।
अग्निरूपा अग्निकर्माणः । सन्नद्धाः कवचिन इति वा ।
दधिक्रा व्याख्यातः । तस्यैषा भवति ३०

आ दधिक्राः शवसा पञ्च कृष्टीः सूर्य इव ज्योतिषापस्ततान ।

सहस्रसाः शतसा वाज्यर्वा पृणक्तु मध्वा समिमा वचांसि ॥

आतनोति दधिक्राः शवसा वलेनापः सूर्य इव ज्योतिषा पञ्च मनुष्यजातानि । सहस्रसाः शतसा । वाजी वेजनवान् । अर्वा ईरणवान् । संपृणक्तु नो मधुनोदकेन वचनानीमानीति । मधु धमतेर्विपरीतस्य ।
सविता सर्वस्य प्रसविता । तस्यैषा भवति ३१

सविता यन्त्रैः पृथिवीमरम्णादस्कम्भने सविता द्यामदृंहत् ।
अश्वमिवाधुक्षद्धुनिमन्तरिक्षमतूर्ते बद्धं सविता समुद्रम् ॥

सविता यन्त्रैः पृथिवीमरमयदनारम्भणेऽन्तरिक्षे । सविता द्यामदृंहत् । अश्वमिवाधुक्षद्धुनिमन्तरिक्षे मेघम् । बद्धमतूर्ते । बद्धमतूर्ण इति वा । अत्वरमाण इति वा । सविता समुदितारमिति ।
कमन्यं मध्यमादेवमवक्ष्यत् । आदित्योऽपि सवितोच्यते । तथा च हैरण्यस्तूपे स्तुतः । अर्चन्हिरण्यस्तूप ऋषिरिदं सूक्तं प्रोवाच । तदभिवादिन्येषर्ग्भवति ३२

हिरण्यस्तूपः सवितर्यथा त्वाङ्गिरसो जुह्वे वाजे अस्मिन् ।
एवा त्वार्चन्नवसे वन्दमानः सोमस्येवांशुं प्रति जागराहम् ॥

हिरण्यस्तूपो हिरण्यमयः स्तूपः । हिरण्यमयः स्तूपोऽस्येति वा । स्तूपः स्त्यायतेः संघातः । सवितर्यथा त्वाङ्गिरसो जुह्वे वाजेऽन्नेऽस्मिन्नेवं त्वार्चन् । अवनाय वन्दमानः सोमस्येवांशुं प्रतिजागर्म्यहम् ।
त्वष्टा व्याख्यातः । तस्यैषा भवति ३३

दे॒वस्त्वष्टा॑ सवि॒ता वि॒श्वरू॑पः पु॒पोष॑ प्र॒जाः पु॑रु॒धा ज॑जान ।
इ॒मा च॒ विश्वा॒ भुव॑नान्यस्य म॒हद्दे॒वाना॑मसु॒र॒त्वमेक॑म् ॥

देवस्त्वष्टा सविता सर्वरूपः पोषति प्रजा रसानुप्रदानेन । बहुधा चेमा जनयति । इमानि च सर्वाणि भूतान्युदकान्यस्य । महच्चास्मै देवानामसुरत्वमेकम् । प्रज्ञावत्त्वं वा । अनवत्त्वं वा । अपि वासुरिति प्रज्ञानाम । अस्यत्यनर्थान् । अस्ताश्चास्यामर्थाः । असुरत्वमादिलुप्तम् ।
वातो वातीति सतः । तस्यैषा भवति ३४

वात॒ आ वा॑तु भेष॒जं श॒म्भु म॑यो॒भु नो॑ हृ॒दे ।
प्र ण॒ आयूँ॑षि तारिषत् ॥

वात आवातु भैषज्यानि । शंभु मयोभु च नो हृदयाय ।
प्रवर्धयतु च न आयुः । अग्निर्व्याख्यातः । तस्यैषा भवति ३५

प्रति॒ त्यं चारु॑मध्व॒रं गो॑पी॒थाय॒ प्र हू॑यसे ।
म॒रुद्भि॑रग्न॒ आ ग॑हि ॥

तं प्रति चारुमध्वरं सोमपानाय प्रहूयसे । सोऽग्ने मरुद्भिः सहागच्छेति । कमन्यं मध्यमादेवमवक्ष्यत् । तस्यैषापरा भवति ३६

अ॒भि त्वा॑ पू॒र्वपी॑तये सृ॒जामि॑ सो॒म्यं मधु॑ ।
म॒रुद्भि॑रग्न॒ आ ग॑हि ॥

अभिसृजामि त्वा पर्वपीतये पूर्वपानाय । सोम्यं मधु सोममयम् । सोऽग्ने मरुद्भिः सहागच्छेति ३७

वेनो वेनतेः कान्तिकर्मणः । तस्यैषा भवति ३८

अयं वेनश्चोदयत्पृश्निगर्भा ज्योतिर्जरायू रजसो विमाने ।
इममपां संगमे सूर्यस्य शिशुं न विप्रा मतिभी रिहन्ति ॥

अयं वेनश्चोदयत् । पृश्निगर्भाः प्राष्टवर्णगर्भाः । आप इति वा ।
ज्योतिर्जरायुः । ज्योतिरस्य जरायुस्थानीयं भवति । जरायु
जरया गर्भस्य । जरया यूयत इति वा । इममपां च संगमने
सूर्यस्य च शिशुमिव विप्रा मतिभी रिहन्ति । लिहन्ति ।
स्तुवन्ति । वर्धयन्ति । पूजयन्तीति वा । शिशुः शंसनीयो
भवति । शिशीतेर्वा स्यात् दानकर्मणः । चिरलब्धो गर्भो भवति ।
असुनीतिः । असून्नयति । तस्यैषा भवति ३९

असुनीते मनो अस्मासु धारय जीवातवे सु प्र तिरा न आयुः ।
रारन्धि नः सूर्यस्य संदृशि घृतेन त्वं तन्वं वर्धयस्व ॥

असुनीते मनोऽस्मासु धारय । चिरं जीवनाय । प्रवर्धय च न
आयू रन्धय च नः सूर्यस्य संदर्शनाय ।
रध्यतिर्वशगमनेऽपि दृश्यते ।

मा रधाम द्विषते सोम राजन् । इत्यपि निगमो भवति ।

घृतेन त्वमात्मानं तन्वं वर्धयस्व ।
ऋतो व्याख्यातः । तस्यैषा भवति ४०

ऋतस्य हि शुरुधः सन्ति पूर्वीर्ऋतस्य धीतिर्वृजिनानि हन्ति ।
ऋतस्य श्लोको बधिरा ततर्द कर्णा बुधानः शुचमान आयोः ॥

ऋतस्य हि शुरुधः सन्ति पूर्वीः । ऋतस्य प्रज्ञा वर्जनीयानि हन्ति
। ऋतस्य श्लोको बधिरस्यापि कर्णावातृणत्ति । बधिरो बद्धश्रोत्रः
। कर्णौ बोधयन् । दीप्यमानश्च । आयोः अयनस्य मनुष्यस्य ।
ज्योतिषो वोदकस्य वा ।

इन्दुरिन्धेः । उनत्तेर्वा । तस्यैषा भवति ४१

प्र तद्वोचेयं भव्यायेन्दवे हव्यो न य इषवान्मन्म रेजति रक्षोहा मन्म रेजति ।
स्वयं सो अस्मदा निदो वधैरजेत दुर्मतिम् ।
अव स्रवेदघशंसोऽवतरमव क्षुद्रमिव स्रवेत् ॥

प्रब्रवीमि तद् भव्यायेन्दवे । हवनार्ह इव । य इषवानन्नवान् । कामवान्वा । मननानि च नो रेजयति । रक्षोहा च । बलेन रेजयति । स्वयं सोऽस्मदभिनिन्दितारम् । वधैरजेत दुर्मतिम् । अवस्रवेदघशंसः । ततश्चावतरं क्षुद्रमिवावस्रवेत् । अभ्यासे भूयाँसमर्थं मन्यन्ते । यथा । अहो दर्शनीय । अहो दर्शनीय इति ।
तत्परुच्छेपस्य शीलम् । परुच्छेप ऋषिः । पर्ववच्छेपः । परुषिपरुषि शेपोऽस्येति वा ।
इतीमानि सप्तविंशतिर्देवतानामधेयान्यनुक्रान्तानि । सूक्तभाञ्जि हविर्भाञ्जि । तेषामेतान्यहविर्भाञ्जि । वेनः । असुनीतिः । ऋतः । इन्दुः ।
प्रजापतिः प्रजानां पाता वा पालयिता वा । तस्यैषा भवति ४२

प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव ।
यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम् ॥

प्रजापते न हि त्वदेतान्यन्यः सर्वाणि जातानि तानि परिबभूव । यत्कामास्ते जुहुमः । तन्नो अस्तु । वयं स्याम पतयो रयीणाम् । इत्याशीः ।
अहिर्व्याख्यातः । तस्यैषा भवति ४३

अब्जामुक्थैरहिं गृणीषे बुध्ने नदीनां रजःसु षीदन् ॥

अप्सुजमुक्थैरहिं गृणीषे बुध्ने नदीनां रजस्सु उदकेषु सीदन् ।
बुध्नमन्तरिक्षम् । बद्धा अस्मिन्धृता आप इति वा । इदमपीतरद्
बुध्नमेतस्मादेव । बद्धा अस्मिन्धृताः प्राणा इति ।
योऽहिः स बुध्न्यः । बुध्नमन्तरिक्षम् । तन्निवासात् । तस्यैषा
भवति ४४

मा नोऽहिर्बुध्न्यो रिषे धान्मा यज्ञो अस्य स्त्रिधदृतायोः ।

मा च नोऽहिर्बुध्न्यो रेषणाय धात् । मास्य यज्ञोखा च स्त्रिधत् ।
यज्ञकामस्य । सुपर्णो व्याख्यातः । तस्यैषा भवति ४५

एकः सुपर्णः स समुद्रमा विवेश स इदं विश्वं भुवनं वि चष्टे ।
तं पाकेन मनसापश्यमन्तितस्तं माता रेळ्हि स उ रेळ्हि मातरम् ॥

एकं सुपर्णः स समुद्रमाविशति । स इमानि सर्वाणि
भूतान्यभिविपश्यति । तं पाकेन मनसापश्यमन्तितः ।
इत्यृषेर्दृष्टार्थस्य प्रीतिर्भवति । आख्यानसंयुक्ता । तं माता रेळ्हि
। वागेषा माध्यमिका । स उ मातरं रेळ्हि ।
पुरूरवा बहुधा रोरूयते । तस्यैषा भवति ४६

समस्मिञ्जायमान आसत ग्ना उतेमवर्धन्नद्य १ः स्वगूर्ताः ।
महे यत्त्वा पुरूरवो रणायावर्धयन्दस्युहत्याय देवाः ॥

समासतास्मिञ्जायमाने । ग्ना गमनादापः । देवपत्न्यो वा ।
अपि चैनमवर्धयन् । नद्यः स्वगूर्ताः स्वयंगामिन्यः । महते च
यत् त्वा पुरूरवः । रणाय रमणीयाय संग्रामायावर्धयन्
दस्युहत्याय च देवा देवाः ४७

अथातो मध्यस्थाना वायवा याह्यासस्त्राणासो नीचीनबारन्तमूष्विमा

रुद्राय या ते दिद्युज्जराबोधादर्दरुद्यो जात एव वि
वृक्षानश्नापिनद्धमश्मास्यमवतं क्षेत्रस्य पतिः क्षेत्रस्य पतिना
क्षेत्रस्यपतेऽमीवहा पुनरेहि यो अनिध्मः परेयिवाँसं सेनेव सृष्टा
मित्रो जनान्हिरण्यगर्भो ये ते सरस्व विश्वकर्मा सर्वस्य विश्वकर्मा
विमना विश्वकर्मन्हविषा त्यमू षु सद्यश्चिद्यस्त्वया मन्यवा दधिक्राः
सविता यन्त्रैर्हिरण्यस्तूपो देवस्त्वष्टा वात आ वातु प्रति त्यमभि त्वा
वेनो वेनतेरयं वेनोऽसुनीत ऋतस्य हि प्र तद्वोचेयं
प्रजापतेऽब्जामुक्थैर्मा नोऽहिरेकः सुपर्णः समस्मिन्सप्तचत्वारिंशत् ॥

इत्युत्तरषट्के चतुर्थोऽध्यायः

इति निरुक्ते दशमोऽध्यायः समाप्तः

## अथैकादशोऽध्यायः

श्येनो व्याख्यातः । तस्यैषा भवति १

आदाय श्येनो अभरत्सोमं सहस्रं सवाँ अयुतं च साकम् ।
अत्रा पुरंन्धिरजहादरातीर्मदे सोमस्य मूरा अमूरः ॥

आदय श्येनोऽहरत्सोमम् । सहस्रं सवान् । अयुतं च सह ।
सहस्रं सहस्रसाव्यमभिप्रेत्य । तत्रायुतं सोमभक्षाः ।
तत्संबन्धेनायुतं दक्षिणा इति वा । तत्र
पुरन्धिरजहादमित्रानदानानिति वा । मदे सोमस्य मूरा अमूरः इति
। ऐन्द्रे च सूक्ते सोमपानेन च स्तुतः । तस्मादिन्द्रं मन्यन्ते ।
ओषधिः सोमः सुनोतेः । यदेनमभिषुण्वन्ति । बहुलमस्य
नैघण्टुकं वृत्तम् । आश्चर्यमिव प्राधान्येन ।
तस्य पावमानीषु निदर्शनायोदाहरिष्यामः २

स्वादिष्ठया मदिष्ठया पवस्व सोम धारया ।
इन्द्राय पातवे सुतः ॥

इति सा निगदव्याख्याता ।
अथैषापरा भवति । चन्द्रमसो वा । एतस्य वा ३

सोमं मन्यते पपिवान्यत्संपिंषन्त्योषधिम् ।
सोमं यं ब्रह्माणो विदुर्न तस्याश्नाति कश्चन ॥

सोमं मन्यते पपिवान्यत्संपिंषन्त्योषधिमिति वृथासुतमसोममाह ।
सोमं यं ब्रह्माणो विदुरिति । न तस्याश्नाति
कश्चनायज्वेत्यधियज्ञम् ।
अथाधिदैवतम् । सोमं मन्यते पपिवान्यत्संपिंषन्त्योषधिमिति
यजुःसुतमसोममाह । सोमं यं ब्रह्माणो विदुश्चन्द्रमसम् । न

तस्याश्नाति कश्चनादेव इति । अथैषापरा भवति । चन्द्रमसो वा । एतस्य वा ४

यत्त्वा देव प्र पिबन्ति तत आ प्यायसे पुनः ।
वायुः सोमस्य रक्षिता समानां मास आकृतिः ॥

यत् त्वा देव प्रपिबन्ति तत आप्यायसे पुनरिति नाराशंसानभिप्रेत्य । पूर्वपक्षापरपक्षाविति वा । वायुः सोमस्य रक्षिता । वायुमस्य रक्षितारमाह । साहचर्यात् । रसहरणाद्वा । समानां संवत्सराणां मास आकृतिः सोमः । रूपविशेषैरोषधिः । चन्द्रमा वा ।
चन्द्रमाश्चायन्द्रमति । चन्द्रो माता । चान्द्रं मानमस्येति वा । चन्द्रश्चन्दतेः । कान्तिकर्मणः । चन्दनमित्यप्यस्य भवति । चारु द्रमति । चिरं द्रमति । चमेर्वा पूर्वम् । चारु रुचेर्विपरीतस्य ।
तस्यैषा भवति ५

नवोनवो भवति जायमानोऽह्नां केतुरुषसामेत्यग्रम् ।
भागं देवेभ्यो वि दधात्यायन्प्र चन्द्रमास्तिरते दीर्घमायुः ॥

नवोनवो भवति जायमानः । इति पूर्वपक्षादिमभिप्रेत्य । अह्नां केतुरुषसामेत्यग्रम् । इत्यपरपक्षान्तमभिप्रेत्य । आदित्यदैवतो द्वितीयः पाद इत्येके । भागं देवेभ्यो विदधात्यायन् । इत्यर्धमासेज्यामभिप्रेत्य । प्रवर्धयते चन्द्रमा दीर्घमायुः । मृत्युर्मारयतीति सतः । मृतं च्यावयतीति वा शतबलाक्षो मौद्गल्यः । तस्यैषा भवति ६

परं मृत्यो अनु परेहि पन्थां यस्ते स्व इतरो देवयानात् ।
चक्षुष्मते शृण्वते ते ब्रवीमि मा नः प्रजां रीरिषो मोत वीरान् ॥

परं मृत्यो । ध्रुवं मृत्यो । ध्रुवं परेहि मृत्यो । कथितं तेन मृत्यो । मृतं च्यावयते भवति मृत्यो । मदेर्वा मुदेर्वा । तेषामेषा भवति ७

त्वेषमित्था समरणं शिमीवतोरिन्द्राविष्णू सुतपा वामुरुष्यति ।
या मर्त्याय प्रतिधीयमानमित्कृशानोरस्तुरसनामुरुष्यथः ॥

इति सा निगदव्याख्याता ।
विश्वानरो व्याख्यातः । तस्यैषा भवति ८

प्र वो महे मन्दमानायान्धसोऽर्चा विश्वानराय विश्वाभुवे ।
इन्द्रस्य यस्य सुमखं सहो महि श्रवो नृम्णं च रोदसी सपर्यतः ॥

प्रार्चत यूयं स्तुतिं महतेऽन्धसोऽन्नस्य दात्रे । मन्दमानाय मोदमानाय स्तूयमानाय शब्दायमानायेति वा । विश्वानराय सर्वं विभूताय । इन्द्रस्य यस्य प्रीतौ सुमहद्बलम् । महच्च श्रवणीयं यशः । नृम्णं च बलं नृन्नतम् । द्यावापृथिव्यौ वः परिचरत इति । कमन्यं मध्यमादेवमवक्ष्यत् ।
तस्यैषापरा भवति ९

उदु ज्योतिरमृतं विश्वजन्यं विश्वानरः सविता देवो अश्रेत् ॥
उदशिश्रियत् । ज्योतिः । अमृतम् । सर्वजन्यम् । विश्वानरः सविता देव इति । धाता सर्वस्य विधाता । तस्यैषा भवति १०

धाता ददातु दाशुषे प्राचीं जीवातुमक्षिताम् ।
वयं देवस्य धीमहि सुमतिं सत्यधर्मणः ॥

धाता ददातु दत्तवते प्रवृद्धां जीविकामनुपक्षीणाम् । वयं देवस्य धीमहि सुमतिं कल्याणीं मतिं सत्यधर्मणः ।
विधाता धात्रा व्याख्यातः । तस्यैष निपातो भवति

बहुदेवतायामृचि ११

सोमस्य राज्ञो वरुणस्य धर्मणि बृहस्पतेरनुमत्या उ शर्मणि ।
तवाहमद्य मघवन्नुपस्तुतौ धातर्विधातः कलशाँ अभक्षयम् ॥

इत्येताभिर्देवताभिरभिप्रसूतः सोमकलशानभक्षयमिति । कलशः कस्मात् । कला अस्मिञ्छेरते मात्राः । कलिश्च कलाश्च किरतेः । विकीर्णमात्राः १२

अथातो मध्यस्थाना देवगणाः । तेषां मरुतः प्रथमागामिनो भवन्ति । मरुतो मितराविणो वा । मितरोचिनो वा । महद् द्रवन्तीति वा । तेषामेषा भवति १३

आ विद्युन्मद्भिर्मरुतः स्वर्कै रथेभिर्यात ऋष्टिमद्भिरश्वपर्णैः ।
आ वर्षिष्ठया न इषा वयो न पप्तता सुमायाः ॥

विद्युन्मद्भिर्मरुतः । स्वर्कैः स्वञ्चनैरिति वा । स्वर्चनैरिति वा । स्वर्चिभिरिति वा । रथैरायात । ऋष्टिमद्भिः ।
अश्वपर्णैरश्वपतनैः । वर्षिष्ठेन च नोऽन्नेन वय इवापतत । सुमायाः कल्याणकर्माणो वा । कल्याणप्रज्ञा वा ।
रुद्रा व्याख्याताः । तेषामेषा भवति १४

आ रुद्रास इन्द्रवन्तः सजोषसो हिरण्यरथाः सुविताय गन्तन ।
इयं वो अस्मत्प्रति हर्यते मतिस्तृष्णजे न दिव उत्सा उदन्यवे ॥

आगच्छत रुद्रा इन्द्रेण । सहजोषणाः । सुविताय कर्मणे । इयं वोऽस्मदपि प्रतिकामयते मतिः । तृष्णज इव दिव उत्सा उदन्यवे । तृष्णक् तृष्यतेः । उदन्युरुदन्यतेः ।
ऋभव उरु भान्तीति वा । ऋतेन भान्तीति वा । ऋतेन भवन्तीति वा । तेषामेषा भवति १५

विष्ट्वी शमी तरणित्वेन वाघतो मर्तासः सन्तो अमृतत्वमानशुः ।
सौधन्वना ऋभवः सूरचक्षसः संवत्सरे समपृच्यन्त धीतिभिः ॥

कृत्वा कर्माणि क्षिप्रत्वेन । वोळ्हारो मेधाविनो वा । मर्तासः सन्तोऽमृतत्वमानशिरे । सौधन्वना ऋभवः सूरख्याना वा । सूरप्रज्ञा वा । संवत्सरे समपृच्यन्त धीतिभिः कर्मभिः ।
ऋभुर्विभ्वा वाज इति सुधन्वन आङ्गिरसस्य त्रयः पुत्रा बभूवुः । तेषां प्रथमोत्तमाभ्यां बहुवन्निगमा भवन्ति न मध्यमेन ।
तदेतदृभोश्च बहुवचनेन चमसस्य च संस्तवेन बहूनि दशतयीषु सूक्तानि भवन्ति ।
आदित्यरश्मयोऽप्यृभव उच्यन्ते ।
अगोह्यस्य यदसस्तना गृहे तदद्येदमृभवो नानु गच्छथ ।
अगोह्य आदित्योऽगूहनीयः । तस्य यदस्वपथ गृहे । यावत्तत्र भवथ न तावदिह भवथेति ।
अङ्गिरसो व्याख्याताः । तेषामेषा भवति १६

विरूपास इदृषयस्त इद्गम्भीरवेपसः ।
ते अङ्गिरसः सूनवस्ते अग्नेः परि जज्ञिरे ॥

बहुरूपा ऋषयः । ते गम्भीरकर्माणो वा । गम्भीरप्रज्ञा वा । तेऽङ्गिरसः पुत्राः । तेऽग्नेरधिजज्ञिरे । इत्यग्निजन्म ।
पितरो व्याख्याताः । तेषामेषा भवति १७

उदीरतामवर उत्परास उन्मध्यमाः पितरः सोम्यासः ।
असुं य ईयुरवृका ऋतज्ञास्ते नोऽवन्तु पितरो हवेषु ॥

उदीरतामवरे । उदीरतां परे । उदीरतां मध्यमाः पितरः । सोम्याः सोमसंपादिनस्तेऽसुं ये प्राणमन्वीयुः । अवृका अनमित्राः । सत्यज्ञा वा यज्ञज्ञा वा । ते न आगच्छन्तु पितरो ह्वानेषु ।

माध्यमिको यम इत्याहुः । तस्मान्माध्यमिकान्पितॄन्मन्यन्ते ।
अङ्गिरसो व्याख्याताः । पितरो व्याख्याताः । भृगवो
व्याख्याताः । अथर्वाणोऽथनवन्तः । थर्वतिश्चरतिकर्मा ।
तत्प्रतिषेधः । तेषामेषा साधारणा भवति १८

अङ्गिरसो न पितरो नवग्वा अथर्वाणो भृगवः सोम्यासः ।
तेषां वयं सुमतौ यज्ञियानामपि भद्रे सौमनसे स्याम ॥

अङ्गिरसो नः पितरः । नवगतयो नवनीतगतयो वा । अथर्वाणो
भृगवः । सोम्याः सोमसम्पादिनः । तेषां वयम् । सुमतौ
कल्याण्यां मतौ । यज्ञियानामपि चैषाम् । भद्रे भन्दनीये ।
भाजनवति वा । कल्याणे मनसि । स्यामेति ।
माध्यमिको देवगण इति नैरुक्ताः । पितर इत्याख्यानम् ।
अथाप्यृषयः स्तूयन्ते १९

सूर्यस्येव वक्षथो ज्योतिरेषां समुद्रस्येव महिमा गभीरः ।
वातस्येव प्रजवो नान्येन स्तोमो वसिष्ठा अन्वेतवे वः ॥

इति यथा ।
आप्त्या आप्नोतेः । तेषामेष निपातो भवत्यैन्द्र्यामृचि २०

स्तुषेय्यं पुरुवर्पसमृभ्वमिनतममाप्त्यमाप्त्यानाम् ।
आ दर्षते शवसा सप्त दानून्प्र साक्षते प्रतिमानानि भूरि ॥

स्तोतव्यम् । बहुरूपम् । उरुभूतम् । ईश्वरतमम् । आप्तव्यम्
। आप्तव्यानाम् । आदृणाति । यः । शवसा बलेन ।
सप्तदातॄनिति वा । सप्तदानवानिति वा । प्रसाक्षते ।
प्रतिमानानि । बहूनि । साक्षतिराप्नोतिकर्मा २१

अथातो मध्यस्थानाः स्त्रियः । तासामदितिः प्रथमागामिनी भवति

। अदितिर्व्याख्याता । तस्या एषा भवति २२

दक्षस्य वादिते जन्मनि व्रते राजाना मित्रावरुणा विवाससि ।
अतूर्तपन्थाः पुरुरथो अर्यमा सप्तहोता विषुरूपेषु जन्मसु ॥

दक्षस्य वादिते जन्मनि । व्रते कर्मणि । राजानौ । मित्रावरुणौ
। परिचरसि । विवासतिः परिचर्यायाम् ।

हविष्माँ आविवासति ।

इत्याशास्तेर्वा । अतूर्तपन्था अत्वरमाणपन्थाः । बहुरथः ।
अर्यमादित्यः । अरीन्नियच्छति । सप्तहोता । सप्तास्मै रश्मयो
रसानभिसन्नामयन्ति । सप्तैनमृषयः स्तुवन्तीति वा ।
विषमरूपेषु जन्मसु । कर्मसूदयेषु ।
आदित्यो दक्षः । इत्याहुः । आदित्यमध्ये च स्तुतः । अदि-
तिर्दाक्षायणी ।
अदितेर्दक्षो अजायत दक्षाद्वदितिः परि । इति च ।

तत्कथमुपपद्यते । समानजन्मानौ स्यातामिति । अपि वा
देवधर्मेणेतरेतरजन्मानौ स्याताम् । इतरेतरप्रकृती ।
अग्निरप्यदितिरुच्यते । तस्यैषा भवति २३

यस्मै त्वं सुद्रविणो ददाशोऽनागास्त्वमदिते सर्वताता ।
यं भद्रेण शवसा चोदयासि प्रजावता राधसा ते स्याम ॥

यस्मै त्वं सुद्रविणो ददासि । अनागास्त्वम् । अनपराधत्वम् ।
अदिते । सर्वासु कर्मततिषु । आग आङ्पूर्वाद्गमेः । एन एतेः
। किल्बिषं किल्भिदम् । सुकृतकर्मणो भयम् । कीर्तिमस्य
भिनत्तीति वा । यं भद्रेण । शवसा बलेन । चोदयसि ।
प्रजावता च राधसा धनेन ते वयमिह स्यामेति ।

सरसा सरणात् । तस्या एषा भवति २४

किमिच्छन्ती सरमा प्रेदमानड् दूरे ह्यध्वा जगुरिः पराचैः ।
कास्मेहितिः का परितक्म्यासीत्कथं रसाया अतरः पयाँसि ॥

किमिच्छन्ती सरमेदं प्रानट् । दूरे ह्यध्वा । जगुरिर्जङ्गम्यतेः ।
पराञ्चनैरचितः ।
का तेऽस्मास्वर्थहितिरासीत् । किं परितकनम् । परितक्म्या
रात्रिः । परित एनां तक्म । तक्मेत्युष्णनाम । तकत इति सतः
। कथं रसाया अतरः पयाँसीति । रसा नदी रसतेः शब्दकर्मणः
। कथं रसानि तान्युदकानीति वा ।
देवशुनीन्द्रेण प्रहिता पणिभिरसुरैः समूदे । इत्याख्यानम् ।
सरस्वती व्याख्याता । तस्या एषा भवति २५

पावका नः सरस्वती वाजेभिर्वाजिनीवती ।
यज्ञं वष्टु धियावसुः ॥

पावका नः सरस्वती । अन्नैरन्नवती । यज्ञं वष्टु धियावसुः
कर्मवसुः । तस्या एषापरा भवति २६

महो अर्णः सरस्वती प्र चेतयति केतुना ।
धियो विश्वा वि राजति ॥

महदर्णः सरस्वती प्रचेतयति प्रज्ञापयति केतुना कर्मणा प्रज्ञया वा ।
इमानि च सर्वाणि प्रज्ञानान्यभिविराजति । वागर्थेषु विधीयते ।
तस्मान्माध्यमिकां वाचं मन्यन्ते । वाग्व्याख्याता । तस्या एषा
भवति २७

यद्वाग्वदन्त्यविचेतनानि राष्ट्री देवानां निषसाद मन्द्रा ।
चतस्र ऊर्जं दुदुहे पयाँसि क्व स्विदस्याः परमं जगाम ॥

यद्वाग्वदन्ति । अविचेतनान्यविज्ञातानि । राष्ट्री देवानां निषसाद मदना । चतस्रोऽनुदिश ऊर्जं दुदुहे पयाँसि । क्व स्विदस्याः परमं जगामेति । यत्पृथिवीं गच्छतीति वा । यदादित्यरश्मयो हरन्तीति वा ।
तस्या एषापरा भवति २८

दे॒वीं वाच॑मजनयन्त दे॒वास्तां वि॒श्वरू॑पाः प॒शवो॑ वदन्ति ।
सा नो॑ म॒न्द्रेष॒मूर्जं॒ दुहा॑ना धे॒नुर्वाग॒स्मानुप॒ सुष्टु॒तैतु॑ ॥

देवीं वाचमजनयन्त देवाः । तां सर्वरूपाः पशवो वदन्ति । व्यक्तवाचश्चाव्यक्तवाचश्च । सा नो मदनान्नं च रसं च दुहाना धेनुर्वागस्मानुपैतु सुष्टुता ।
अनुमति राकेति देवपत्न्याविति नैरुक्ताः । पौर्णमास्याविति याज्ञिकाः । या पूर्वा पौर्णमासी सानुमतिः । योत्तरा सा राका । इति विज्ञायते ।
अनुमतिरनुमननात् । तस्या एषा भवति २९

अन्विद॑नुमते॒ त्वं मन्या॑सै॒ शं च॑ नस्कृधि ।
क्रत्वे॒ दक्षा॑य नो हिनु॒ प्र ण॒ आयूँषि तारिषः ॥

अनुमन्यस्वानुमते । त्वं सुखं च नः कुरु । अन्नं च नोऽपत्याय धेहि । प्रवर्धय च न आयुः ।
राका रातेर्दानकर्मणः । तस्या एषा भवति ३०

रा॒काम॒हं सु॒हवां॑ सुष्टु॒ती हु॑वे शृ॒णोतु॑ नः सु॒भगा॒ बोध॑तु॒ त्मना॑ ।
सीव्य॒त्वपः॑ सू॒च्याछिद्य॑मानया॒ ददा॑तु वी॒रं श॒तदा॑यमु॒क्थ्य॑म् ॥

राकामहं सुह्वानां सुष्टुत्या ह्वये । शृणोतु नः सुभगा । बोधत्वात्मना । सीव्यत्वपः प्रजननकर्म । सूच्याछिद्यमानया ।

सूची सीव्यतेः । ददातु वीरम् । शतप्रदम् । उक्थ्यं वक्तव्यप्रशंसम् ।
सिनीबाली कुहूरिति देवपत्न्याविति नैरुक्ताः । अमावास्ये इति याज्ञिकाः ।
या पूर्वामावास्या सा सिनीवाली । योत्तरा सा कुहूः । इति विज्ञायते ।
सिनीवाली सिनमन्नं भवति । सिनाति भूतानि । वालं पर्व वृणोतेः । तस्मिन्नन्नवती । वालिनी वा ।
वालेनेवास्यामणुत्वाच्चन्द्रमाः सेवितव्यो भवतीति वा । तस्या एषा भवति ३१

सिनीवालि पृथुष्टुके या देवानामसि स्वसा ।
जुषस्व हव्यमाहुतं प्रजां देवि दिदिड्ढि नः ॥

सिनीवालि । पृथुजघने । स्तुकः स्त्यायतेः संघातः ।
पृथुकेशस्तुके । पृथुष्टुते वा । या त्वं देवानामसि स्वसा ।
स्वसा सु असा । स्वेषु सीदतीति वा । जुषस्व हव्यमदनम् ।
प्रजां च देवि दिश नः ।
कुहूर्गूहतेः । क्वाभूदिति वा । क्व सती हूयत इति वा ।
क्वाहुतं हविर्जुहोतीति वा । तस्या एषा भवति ३२

कुहूमहं सुकृतं विद्मनापसमस्मिन्यज्ञे सुहवां जोहवीमि ।
सा नो ददातु श्रवणं पितॄणां तस्यै ते देवि हविषा विधेम ॥

कुहूमहं सुकृतं विदितकर्माणमस्मिन्यज्ञे सुह्वानामाह्वये । सा नो ददातु श्रवणं पितॄणाम् । पित्र्यं धनमिति वा । पित्र्यं यश इति वा । तस्यै ते देवि हविषा विधेमेति व्याख्यातम् ।
यमी व्याख्याता । तस्या एषा भवति ३३

अन्यमू षु त्वं यम्यन्य उ त्वां परि ष्वजाते लिबुजेव वृक्षम् ।
तस्य वा त्वं मन इच्छा स वा तवाधा कृणुष्व संविदं सुभद्राम् ॥

अन्यमेव हि त्वं यमि । अन्यस्त्वां परिष्वङ्क्ष्यते । लिबुजेव
वृक्षम् । तस्य वा त्वं मन इच्छ । स वा तव । अधानेन
कुरुष्व संविदम् । सुभद्रां कल्याणभद्राम् ।
यमी यमं चकमे । तां प्रत्याचचक्षे । इत्याख्यानम् ३४

उर्वशी व्याख्याता । तस्या एषा भवति ३५

विद्युन्न या पतन्ती दविद्योद्भरन्ती मे अप्या काम्यानि ।
जनिष्ठो अपो नर्यः सुजातः प्रोर्वशी तिरत दीर्घमायुः ॥

विद्युदिव या । पतन्त्यद्योतत । हरन्ती मे अप्या काम्यानि ।
उदकान्यन्तरिक्षलोकस्य । यदा नूनमयं जायेताद्भ्योऽध्यप इति ।
नर्यो मनुष्यो नृभ्यो हितः । नरापत्यमिति वा । सुजातः
सुजाततरः । अथोर्वशी प्रवर्धयते दीर्घमायुः ।
पृथिवी व्याख्याता । तस्या एषा भवति ३६

बळित्था पर्वतानां खिद्रं बिभर्षि पृथिवि ।
प्र या भूमिं प्रवत्वति मह्ना जिनोषि महिनि ॥

सत्यं त्वं पर्वतानां मेघानां खेदनं छेदनं बलममुत्र धारयसि पृथिवि ।
प्रजिन्वसि या भूमिम् । प्रवणवति । महत्त्वेन ।
महतीत्युदकवतीति वा ।
इन्द्राणी । इन्द्रस्य पत्नी । तस्या एषा भवति ३७

इन्द्राणीमासु नारिषु सुभगामहमश्रवम् ।
नह्यस्या अपरं चन जरसा मरते पतिः ।
विश्वस्मादिन्द्र उत्तरः ॥

इन्द्राणीमासु नारिषु सुभगामहमश्रृणवम् । न ह्यस्या अपरामपि समां जरया म्रियते पतिः । सर्वस्माद् य इन्द्र उत्तरस्तमेतद् ब्रूमः । तस्या एषापरा भवति ३८

नाहमिन्द्राणि रारण सख्युर्वृषाकपेर्ऋते ।
यस्येदमप्यं हविः प्रियं देवेषु गच्छति ।
विश्वस्मादिन्द्र उत्तरः ॥

नाहमिन्द्राणि रमे । सख्युर्वृषाकपेर्ऋते । यस्येदमप्यं हविः । अप्सु शृतम् । अद्भिः संस्कृतमिति वा । प्रियं देवेषु निगच्छति । सर्वस्माद् य इन्द्र उत्तरस्तमेतद् ब्रूमः ।
गौरी रोचतेः । ज्वलतिकर्मणः । अयमपीतरो गौरो वर्ण एतस्मादेव । प्रशस्यो भवति ।
तस्या एषा भवति ३९

गौरीर्मिमाय सलिलानि तक्षत्येकपदी द्विपदी सा चतुष्पदी ।
अष्टापदी नवपदी बभूवुषी सहस्राक्षरा परमे व्योमन् ॥

गौरीर्निर्मिमाय सलिलानि । तक्षती कुर्वती । एकपदी मध्यमेन । द्विपदी मध्यमेन चादित्येन च । चतुष्पदी दिग्भिः । अष्टापदी दिग्भिश्चावान्तरदिग्भिश्च । नवपदी दिग्भिश्चावान्तरदिग्भिश्चादित्येन च । सहस्राक्षरा बहूदका । परमे व्यवने । तस्या एषापरा भवति ४०

तस्याः समुद्रा अधि वि क्षरन्ति तेन जीवन्ति प्रदिशश्चतस्रः ।
ततः क्षरत्यक्षरं तद्विश्वमुप जीवति ॥

तस्याः समुद्रा अधिविक्षरन्ति । वर्षन्ति मेघाः । तेन जीवन्ति दिगाश्रयाणि भूतानि । ततः क्षरत्यक्षरमुदकम् । तत्सर्वाणि

भूतान्युपजीवन्ति ।
गौर्व्याख्याता । तस्या एषा भवति ४१

गौरमीमेदनु वत्सं मिषन्तं मूर्धानं हिङ्ङकृणोन्मातवा उ ।
सृक्वाणं घर्ममभि वावशाना मिमाति मायुं पयते पयोभिः ॥

गौरन्वमीमेद्वत्सम् । मिषन्तमनिमिषन्तम् । आदित्यमिति वा ।
मूर्धानमस्याभिहिङ्ङकरोन्मननाय । सृक्वाणं सरणम् । घर्मं
हरणम् । अभिवावशाना मिमाति मायुम् । प्रप्यायते पयोभिः ।
मायुमिवादित्यमिति वा । वागेषा माध्यमिका । घर्मधुगिति
याज्ञिकाः ।
धेनुर्धयतेर्वा । धिनोतेर्वा । तस्या एषा भवति ४२

उप ह्वये सुदुघां धेनुमेतां सुहस्तो गोधुगुत दोहदेनाम् ।
श्रेष्ठं सवं सविता साविषन्नोऽभीद्धो घर्मस्तदु षु प्र वोचम् ॥

उपह्वये सुदोहनां धेनुमेताम् । कल्याणहस्तो गोधुगपि च
दोग्ध्येनाम् । श्रेष्ठं सवं सविता सुनोतु न इति । एष हि श्रेष्ठः
सर्वेषां सवानां यदुदकं यद्वा पयो यजुष्मत् । अभीद्धो घर्मः । तं
सु प्रब्रवीमि ।
वागेषा माध्यमिका । घर्मधुगिति याज्ञिकाः ।
अघ्न्याहन्तव्या भवति । अघघ्नीति वा । तस्या एषा भवति ४३

सूयवसाद्भगवती हि भूया अथो वयं भगवन्तः स्याम ।
अद्धि तृणमघ्न्ये विश्वदानीं पिब शुद्धमुदकमाचरन्ती ॥

सूयवसादिनी भगवती हि भव । अथेदानीं वयं भगवन्तः स्याम
। अद्धि तृणमघ्न्ये । सर्वदा पिब च शुद्धमुदकमाचरन्ती ।

तस्या एषापरा भवति ४४

हिङ्कृण्वती वसुपत्नी वसूनां वत्समिच्छन्ती मनसाभ्यागात् ।
दुहामश्विभ्यां पयो अघ्न्येयं सा वर्धतां महते सौभगाय ॥

इति सा निगदव्याख्याता ।
पथ्या स्वस्तिः । पन्था अन्तरिक्षम् । तन्निवासात् ।
तस्या एषा भवति ४५

स्वस्तिरिद्धि प्रपथे श्रेष्ठा रेक्णस्वत्यभि या वाममेति ।
सा नो अमा सो अरणे नि पातु स्वावेशा भवतु देवगोपा ॥

स्वस्तिरेव हि प्रपथे श्रेष्ठा । रेक्णस्वती धनवती । अभ्येति या ।
वसूनि वननीयानि । सा नोऽमा गृहे । सा निरमणे । सा
निर्गमने पातु । स्वावेशा भवतु । देवी गोप्त्री
देवान्गोपायत्विति । देवा एनां गोपायन्त्विति वा ।
उषा व्याख्याता । तस्या एषा भवति ४६

अपोषा अनसः सरत्संपिष्टादह बिभ्युषी ।
नि यत्सीं शिश्नथद्वृषा ॥

अपासरदुषाः । अनसः संपिष्टान्मेघाद् बिभ्युषी । अनो वायुर-
नितेः । अपि वोपमार्थे स्यात् । अनस इव शकटादिव । अनः
शकटम् । आनद्धमस्मिंश्चीवरम् । अनितेर्वा स्यात् ।
जीवनकर्मणः । उपजीवन्त्येनत् । मेघोऽप्यन एतस्मादेव ।
यन्निरशिश्नथत् । वृषा वर्षिता मध्यमः ।
तस्या एषापरा भवति ४७

एतदस्या अनः शये सुसंपिष्टं विपाश्या ।
ससार सीं परावतः ॥

एतदस्या अन आशेते सुसंपिष्टम् । इतरदिव । विपाशि
विमुक्तपाशि । ससारोषाः । परावतः प्रेरितवतः । परागताद्वा ।
इळा व्याख्याता । तस्या एषा भवति ४८

अभि न इळा यूथस्य माता स्मन्नदीभिरुर्वशी वा गृणातु ।
उर्वशी वा बृहद्दिवा गृणानाभ्यूर्ण्वाना प्रभृथस्यायोः ।
सिषक्तु न ऊर्जव्यस्य पुष्टेः ॥

अभिगृणातु न इळा । यूथस्य माता । सर्वस्य माता । स्मदभि
नदीभिः । उर्वशी वा गृणातु । उर्वशी वा । बृहद्दिवा
महद्दिवा । गृणाना । अभ्यूर्ण्वाना । प्रभृथस्य प्रभृतस्य ।
आयोरयनस्य मनुष्यस्य ज्योतिषो वोदकस्य वा । सेवतां नोऽन्नस्य
पुष्टेः ।
रोदसी रुद्रस्य पत्नी । तस्या एषा भवति ४९

रथं नु मारुतं वयं श्रवस्युमा हुवामहे ।
आ यस्मिन्तस्थौ सुरणानि बिभ्रती सचा मरुत्सु रोदसी ॥

रथं षिप्रं मारुतं मेघं वयं श्रवणीयमाह्वयामहे । आ यस्मिन्तस्थौ
सुरमणीयान्युदकानि बिभ्रती सचा मरुद्भिः सह रोदसी रोदसी ५०

श्येनो व्याख्यात आदाय स्वादिष्ठया सोमं मन्यते यत्त्वा देव
नवोनवः परं मृत्यो त्वेषमित्था प्र वो मह उदु ज्योतिर्धाता ददातु
सोमस्याथातो मध्यस्थाना देवगणा आ विद्युन्मद्भिरा रुद्रासो विष्ट्वी
शमी विरूपास उदीरतामवरेऽङ्गिरसो नः सूर्यस्येव स्तुषेय्यमथातो
मध्यस्थानाः स्त्रियो दक्षस्य यस्मै त्वं किमिच्छन्ती पावका नो महो
अर्णो यद्वाग्वदन्ती देवीं वाचमन्विदनुमते राकामहं सिनीवालि
कुहूमहमन्यमूषूर्वशी विद्युन्न बळित्थेन्द्राणीं नाहमिन्द्राणि

गौरीर्मिमाय तस्याः समुद्रा गौरमीमेदुप ह्वये सूयवसाद्धिङ्कृरवती स्वस्तिरिद्धयपोषा एतदस्या अभि नो रथं नु मारुतमिति पञ्चाशत् ॥

इत्युत्तरषट्के पञ्चमोऽध्यायः

इति निरुक्त एकादशोऽध्यायः समाप्तः

## अथ द्वादशोऽध्यायः

अथातो द्युस्थाना देवताः । तासामश्विनौ प्रथमागामिनौ भवतः ।
अश्विनौ यद्व्यश्नुवाते सर्वम् । रसेनान्यः । ज्योतिषान्यः ।
अश्वैरश्विनावित्यौर्णवाभः ।
तत्कावश्विनौ । द्यावापृथिव्यावित्येके । अहोरात्रावित्येके ।
सूर्याचन्द्रमसावित्येके । राजानौ पुण्यकृतावित्यैतिहासिकाः ।
तयोः काल ऊर्ध्वमर्धरात्रात्प्रकाशीभावस्यानुविष्टम्भम् । अनुत-
मोभागो हि मध्यमो ज्योतिर्भाग आदित्यः । तयोरेषा भवति १

वसा॑तिषु स्म च॒रथो॒ऽसि॑तौ॒ पेत्वा॑विव ।
कु॒देद॑मश्विना यु॒वम॒भि दे॒वाँ अ॑गच्छतम् ॥

इति सा निगदव्याख्याता ।
तयोः समानकालयोः समानकर्मणोः
संस्तुतप्राययोरसंस्तवेनैषोऽर्धर्चो भवति । वासात्यो अन्य उच्यते
। उषः पुत्रस्त्वन्य इति ।
तयोरेषापरा भवति २

इ॒हेह॑ जा॒ता सम॑वावशीताम॒रे॒पसा॑ त॒न्वा॒ ३॒ नाम॑भि॒ः स्वैः ।
जि॒ष्णुर्वा॑म॒न्यः सुम॑खस्य सू॒रिर्दि॒वो अ॒न्यः सु॒भग॑ः पु॒त्र ऊ॑हे ॥

इह चेह च जातौ संस्तूयेते पापेनालिप्यमानया तन्वा नामभिश्च स्वैः
। जिष्णुर्वामन्यः सुमहतो बलस्येरयिता मध्यमः । दिवोऽन्यः
सुभगः पुत्र ऊह्यत आदित्यः ।
तयोरेषापरा भवति ३

प्रा॒त॒र्युजा॒ वि बो॑धया॒श्विना॒वेह ग॑च्छताम् ।
अ॒स्य सोम॑स्य पी॒तये॑ ॥

प्रातर्योगिनौ विबोधयाश्विनाविहागच्छतामस्य सोमस्य पानाय ।
तयोरेषापरा भवति ४

प्रातर्यजध्वमश्विना हिनोत न सायमस्ति देवया अजुष्टम् ।
उतान्यो अस्मद्यजते वि चावः पूर्वःपूर्वो यजमानो वनीयान् ॥

प्रातर्यजध्वमश्विनौ प्रहिणुत न सायमस्ति देवेज्या अजुष्टमेतत् ।
अप्यन्योऽस्मद्यजते वि चावः । पूर्वःपूर्वो यजमानो
वनीयान्वनयितृतमः ।
तयोः कालः सूर्योदयपर्यन्तः । तस्मिन्नन्या देवता ओप्यन्ते ।
उषा वष्टेः कान्तिकर्मणः । उच्छतेरितरा माध्यमिका । तस्या
एषा भवति ५

उषस्तच्चित्रमा भरास्मभ्यं वाजिनीवति ।
येन तोकं च तनयं च धामहे ॥

उषस्तत् चायनीयं धनमाहर । अस्मभ्यमन्नवति । येन पुत्राँश्च
पौत्राँश्च दधीमहि । तस्या एषापरा भवति ६

एता उ त्या उषसः केतुमक्रत पूर्वे अर्धे रजसो भानुमञ्जते ।
निष्कृण्वाना आयुधानीव धृष्णवः प्रति गावोऽरुषीर्यन्ति मातरः ॥

एतास्ता उषसः केतुमकृषत प्रज्ञानम् । एकस्या एव पूजनार्थे
बहुवचनं स्यात् । पूर्वेऽर्धेऽन्तरिक्षलोकस्य समञ्जते भानुना ।
निष्कृण्वाना आयुधानीव धृष्णवः । निरित्येष समित्येतस्य स्थाने ।

एमीदेषां निष्कृतं जारिणीव । इत्यपि निगमो भवति ।

प्रति यन्ति । गावो गमनात् । अरुषीरारोचनात् । मातरो भासो
निर्मात्र्यः । सूर्या सूर्यस्य पत्नी । एषैवाभिसृष्टकालतमा ।

तस्या एषा भवति ७

सुकिंशुकं शल्मलिं विश्वरूपं हिरण्यवर्णं सुवृतं सुचक्रम् ।
आ रोह सूर्ये अमृतस्य लोकं स्योनं पत्यै वहतुं कृणुष्व ॥

सुकाशनं शन्नमलं सर्वरूपम् । अपि वोपमार्थे स्यात् ।
सुकिंशुकमिव शल्मलिमिति । किंशुकं क्रंशतेः
प्रकाशयतिकर्मणः । शल्मलिः सुशरो भवति । शरवान्वा ।
आरोह सूर्ये अमृतस्य लोकमुदकस्य । सुखं पत्ये वहतुं कुरुष्व ।
सविता सूर्यां प्रायच्छत्सोमाय राज्ञे प्रजापतये वा । इति च
ब्राह्मणम् ।
वृषाकपायी वृषाकपेः पत्नी । एषैवाभिसृष्टकालतमा । तस्या
एषा भवति ८

वृषाकपायि रेवति सुपुत्र आदु सुस्नुषे ।
घसत्त इन्द्र उक्षणः प्रियं काचित्करं हविर्विश्वस्मादिन्द्र उत्तरः ॥

वृषाकपायि रेवति सुपुत्रे मध्यमेन सुस्नुषे माध्यमिकया वाचा ।
स्नुषा साधुसादिनीति वा । साधुसानिनीति वा । स्वपत्यं
तत्सनोतीति वा ।
प्राश्नातु त इन्द्र उक्षण एतान्माध्यमिकान्त्संस्त्यायान् । उक्षण
उक्षतेर्वृद्धिकर्मणः । उक्षन्त्युदकेनेति वा । प्रियं कुरुष्व
सुखाचयकरं हविः । सर्वस्माद् य इन्द्र उत्तरस्तमेतद्ब्रूम
आदित्यम् ।
सरण्यूः सरणात् । तस्या एषा भवति ९

अपागूहन्नमृतां मर्त्येभ्यः कृत्वी सवर्णामददुर्विवस्वते ।
उताश्विनावभरद्यत्तदासीदजहादु द्वा मिथुना सरण्यूः ॥

अपागूहन्नमृतां मर्त्येभ्यः कृत्वी सवर्णामददुर्विवस्वते ।
अप्यश्विनाभरत् यत्तदासीत् । अजहाद् द्वौ मिथुनौ सरण्यूः ।
मध्यमं च माध्यमिकां च वाचमिति नैरुक्ताः । यमं च यमीं
चेत्यैतिहासिकाः ।
तत्रेतिहासमाचक्षते । त्वाष्ट्री सरण्यूर्विवस्वत आदित्याद्यमौ
मिथुनौ जनयाञ्चकार । स सवर्णामन्यां प्रतिनिधायाश्वं रूपं कृत्वा
प्रदुद्राव । स विवस्वानादित्य आश्वमेव रूपं कृत्वा तामनुसृत्य
संबभूव । ततोऽश्विनौ जज्ञाते । सवर्णायां मनुः ।
तदभिवादिन्येषर्ग्भवति १०

त्वष्टा॑ दुहि॒त्रे व॑ह॒तुं कृ॑णो॒तीती॒दं विश्वं॒ भुव॑नं॒ समे॑ति ।
य॒मस्य॑ मा॒ता प॑र्यु॒ह्यमा॑ना म॒हो जा॒या विव॑स्वतो ननाश ॥

त्वष्टा दुहितुर्वहनं करोतीति इदं विश्वं भुवनं समेति । इमानि च
सर्वाणि भूतान्यभिसमागच्छन्ति । यमस्य माता पर्युह्यमाना महतो
जाया विवस्वतो ननाश । रात्रिरादित्यस्य ।
आदित्योदयेऽन्तर्धीयते ११

सविता व्याख्यातः । तस्य कालो यदा
द्यौरपहततमस्काकीर्णरश्मिर्भवति । तस्यैषा भवति १२

विश्वा॑ रू॒पाणि॒ प्रति॑ मुञ्चते क॒विः प्रासा॑वीद्भ॒द्रं द्वि॒पदे॒ चतु॑ष्पदे ।
वि नाक॑मख्यत्सवि॒ता वरे॒ण्योऽनु॑ प्र॒याण॑मु॒षसो॒ वि रा॑जति ॥

सर्वाणि प्रज्ञानानि प्रतिमुञ्चते मेधावी । कविः क्रान्तदर्शनो भवति
। कवतेर्वा । प्रसुवति भद्रं द्विपाद्भ्यश्च चतुष्पाद्भ्यश्च ।
व्यचिख्यपन्नाकं सविता वरणीयः । प्रयाणमनूषसो विराजति ।
अधोरामः सावित्रः । इति पशुसमाम्नाये विज्ञायते ।
कस्मात्सामान्यादिति । अधस्तात्तद्वेलायां तमो

भवत्येतस्मात्सामान्यात् । अधस्ताद्रामोऽधस्तात्कृष्णः ।
कस्मात्सामान्यादिति । अग्निं चित्वा न रामामुपेयात् । रामा
रमणायोपेयते न धर्माय । कृष्णजातीयैतस्मात्सामान्यात् ।
कृकवाकुः सावित्रः । इति पशुसमाम्नाये विज्ञायते ।
कस्मात्सामान्यादिति । कालानुवादं परीत्य । कृकवाकोः पूर्वं
शब्दानुकरणं वचेरुत्तरम् ।
भगो व्याख्यातः । तस्य कालः प्रागुत्सर्पणात् । तस्यैषा भवति
१३

प्रातर्जितं भगमुग्रं हुवेम वयं पुत्रमदितेर्यो विधर्ता ।
आध्रश्चिद्यं मन्यमानस्तुरश्चिद्राजा चिद्यं भगं भक्षीत्याह ॥

प्रातर्जितं भगमुग्रं ह्वयेम वयं पुत्रमदितेर्यो विधारयिता सर्वस्य ।
आध्रश्चिद्यं मन्यमान आढ्यालुर्दरिद्रः । तुरश्चित् । तुर इति
यमनाम । तरतेर्वा । त्वरतेर्वा । त्वरया तूर्णगतिर्यमः । राजा
चिद्यं भगं भक्षीत्याह ।
अन्धो भग इत्याहुरनुत्सृप्तो न दृश्यते । प्राशित्रमस्याक्षिणी
निर्जघान । इति च ब्राह्मणम् ।
जनं भगो गच्छति । इति वा विज्ञायते ।
जनं गच्छत्यादित्य उदयेन ।
सूर्यः सर्तेर्वा । सुवतेर्वा । स्वीर्यतेर्वा । तस्यैषा भवति १४

उदु त्यं जातवेदसं देवं वहन्ति केतवः ।
दृशे विश्वाय सूर्यम् ॥

उद्वहन्ति तं जातवेदसं रश्मयः केतवः । सर्वेषां भूतानां दर्शनाय
सूर्यमिति । कमन्यमादित्यादेवमवक्ष्यत् ।
तस्यैषापरा भवति १५

चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः ।
आप्रा द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च ॥

चायनीयं देवानामुदगमदनीकम् । ख्यानं मित्रस्य वरुणस्याग्नेश्च । आपूपुरद् द्यावापृथिव्यौ चान्तरिक्षं च महत्त्वेन । सूर्य आत्मा जङ्गमस्य च स्थावरस्य च ।
अथ यद्रश्मिपोषं पुष्यति तत्पूषा भवति ।
तस्यैषा भवति १६

शुक्रं ते अन्यद्यजतं ते अन्यद्विषुरूपे अहनी द्यौरिवासि ।
विश्वा हि माया अवसि स्वधावो भद्रा ते पूषन्निह रातिरस्तु ॥

शुक्रं ते अन्यत् । लोहितं ते अन्यत् । यजतं ते अन्यत् । यज्ञियं ते अन्यत् । विषमरूपे ते अहनी कर्म द्यौरिव चासि । सर्वाणि प्रज्ञानाम्यवसि । अन्नवन् । भाजनवती ते पूषन्निह दत्तिरस्तु ।
तस्यैषापरा भवति १७

पथस्पथः परिपतिं वचस्या कामेन कृतो अभ्यानळर्कम् ।
स नो रासच्छुरुधश्चन्द्राग्रा धियंधियं सीषधाति प्र पूषा ॥

पथस्पथः । अधिपतिम् । वचनेन । कामेन कृतः ।
अभ्यानळर्कम् । अभ्यापन्नोऽर्कमिति वा । स नो ददातु चायनीयाग्राणि धनानि । कर्मकर्म च नः प्रसाधयतु पूषेति ।
अथ यद्विषितो भवति तद्विष्णुर्भवति । विष्णुर्विशतेर्वा ।
व्यश्नोतेर्वा । तस्यैषा भवति १८

इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम् ।
समूळ्हमस्य पाँसुरे ॥

यदिदं किं च तद्विक्रमते विष्णुः । त्रिधा निधत्ते पदम् ।

त्रेधाभावाय । पृथिव्यामन्तरिक्षे दिवीति शाकपूणिः ।
समारोहणे विष्णुपदे गयशिरसीत्यौर्णवाभः । समूळ्हमस्य पाँसुरे
प्यायनेऽन्तरिक्षे पदं न दृश्यते । अपि वोपमार्थे स्यात् ।
समूळ्हमस्य पाँसुल इव पदं न दृश्यत इति । पाँसवः पादैः
सूयन्त इति वा । पन्नाः शेरत इति वा । पंसनीया भवन्तीति वा
१९

विश्वानरो व्याख्यातः । तस्यैष निपातो भवत्यैन्द्र्यामृचि २०

वि॒श्वान॑रस्य व॒स्पति॒मना॑नतस्य॒ शव॑सः ।
एवै॑श्च चर्षणी॒नामू॒ती हु॑वे॒ रथा॑नाम् ॥

विश्वानरस्यादित्यस्य । अनानतस्य । शवसो महतो बलस्य ।
एवैश्च कामैरयनैरवनैर्वा । चर्षणीनां मनुष्याणाम् । ऊत्या च
पथा रथानाम् । इन्द्रमस्मिन्यज्ञे ह्वयामि ।
वरुणो व्याख्यातः । तस्यैषा भवति २१

येना॑ पावक॒ चक्ष॑सा भु॒रण्यन्त॒ं जना॒ँ अनु॑ ।
त्वं व॑रुण॒ पश्य॑सि ॥

भुरण्युरिति क्षिप्रनाम । भुरण्युः शकुनिः । भूरिमध्वानं नयति ।
स्वर्गस्य लोकस्यापि वोळ्हा । तत्संपाती भुरण्युः । अनेन
पावकख्यानेन । भुरण्यन्तं जनाँ अनु । त्वं वरुण पश्यसि ।
तत्ते वयं स्तुम इति वाक्यशेषः ।
अपि वोत्तरस्याम् २२

येना॑ पावक॒ चक्ष॑सा भु॒रण्यन्त॒ं जना॒ँ अनु॑ ।
त्वं व॑रुण॒ पश्य॑सि ॥
वि द्यामे॑षि॒ रज॑स्पृ॒थ्वहा॒ मिमा॑नो अ॒क्तुभिः॑ ।

पश्यञ्जन्मानि सूर्य ॥

व्येषि द्याम् । रजश्च । पृथु महान्तं लोकम् । अहानि च
मिमानोऽक्तुभी रात्रिभिः सह । पश्यञ्जन्मानि जातानि सूर्य ।
अपि वा पूर्वस्याम् २३

येना पावक चक्षसा भुरण्यन्तं जनाँ अनु ।
त्वं वरुण पश्यसि ॥
प्रत्यङ देवानां विशः प्रत्यङ्ङुदेषि मानुषान् ।
प्रत्यङ विश्वं स्वर्दृशे ॥

प्रत्यङ्ङिदं सर्वम् । उदेषि । प्रत्यङ्ङिदं ज्योतिरुच्यते ।
प्रत्यङ्ङिदं सर्वमिदमभिविपश्यसीति । अपि वैतस्यामेव २४

येना पावक चक्षसा भुरण्यन्तं जनाँ अनु ।
त्वं वरुण पश्यसि ॥

तेन नो जनानभिविपश्यसि ।
केशी केशा रश्मयः । तैस्तद्वान्भवति । काशनाद्वा ।
प्रकाशनाद्वा । तस्यैषा भवति २५

केश्य१ग्निं केशी विषं केशी बिभर्ति रोदसी ।
केशी विश्वं स्वर्दृशे केशीदं ज्योतिरुच्यते ॥

केश्यग्निं च विषं च । विषमित्युदकनाम । विष्णातेः ।
विपूर्वस्य स्नातेः शुद्ध्यर्थस्य । विपूर्वस्य वा सचतेः ।
द्यावापृथिव्यौ च धारयति । केशीदं सर्वमिदमभिविपश्यति ।
केशीदं ज्योतिरुच्यत इत्यादित्यमाह ।
अथाप्येते इतरे ज्योतिषी केशिनी उच्येते । धूमेनाग्नी । रजसा
च मध्यमः । तयोरेषा साधारणा भवति २६

त्रयः केशिन ऋतुथा वि चक्षते संवत्सरे वपत एक एषाम् ।
विश्वमेको अभि चष्टे शचीभिर्ध्राजिरेकस्य ददृशे न रूपम् ॥

त्रयः केशिन ऋतुथा विचक्षते । कालेकालेऽभिविपश्यन्ति ।
संवत्सरे वपत एक एषाम् । इत्यग्निः पृथिवीं दहति ।
सर्वमेकोऽभिविपश्यति कर्मभिरादित्यः । गतिरेकस्य दृश्यते न
रूपं मध्यमस्य ।
अथ यद् रश्मिभिरभिप्रकम्पयन्नेति तद् वृषाकपिर्भवति ।
वृषाकम्पनः । तस्यैषा भवति २७

पुनरेहि वृषाकपे सुविता कल्पयावहै ।
य एष स्वप्नंशनोऽस्तमेषि पथा पुनः ।
विश्वस्मादिन्द्र उत्तरः ॥

पुनरेहि वृषाकपे सुप्रसूतानि वः कर्माणि कल्पयावहै । य एष
स्वप्नंशनः । स्वप्नान्नाशयति । आदित्य उदयेन । सोऽस्तमेषि
पथा पुनः । सर्वस्माद् य इन्द्र उत्तरस्तमेतद् ब्रूम आदित्यम् ।
यमो व्याख्यातः । तस्यैषा भवति २८

यस्मिन्वृक्षे सुपलाशे देवैः सं पिबते यमः ।
अत्रा नो विश्पतिः पिता पुराणाँ अनु वेनति ॥

यस्मिन्वृक्षे सुपलाशे स्थाने वृतक्षये वा । अपि वोपमार्थे स्यात्
। वृक्ष इव सुपलाश इति । वृक्षो व्रश्चनात् । पलाशं
पलाशनात् । देवैः संगच्छते यमः । रश्मिभिरादित्यः । तत्र
नः सर्वस्य पाता वा पालयिता वा पुराणाननुकामयेत ।
अज एकपादजन एकः पादः । एकेन पादेन पातीति वा । एकेन
पादेन पिबतीति वा । एकोऽस्य पाद इति वा ।

एकं पादं नोत्खिदति ।

इत्यपि निगमो भवति । तस्यैष निपातो भवति वैश्वदेव्यामृचि २९

पावीरवी तन्यतुरेकपादजो दिवो धर्ता सिन्धुरापः समुद्रियः ।
विश्वे देवासः शृणवन्वचांसि मे सरस्वती सह धीभिः पुरन्ध्या ॥

पविः शल्यो भवति । यद्विपुनाति कायम् । तद्वत् ।
पवीरमायुधम् । तद्वानिन्द्रः पवीरवान् ।

अतितस्थौ पवीरवान् ।

इत्यपि निगमो भवति । तद् देवता वाक्पावीरवी । पावीरवी च
दिव्या वाक् । तन्यतुस्तनित्री वाचोऽन्यस्याः । अजश्चैकपाद्
दिवो धारयिता । सिन्धुश्च । आपश्च समुद्रियाश्च । सर्वे च
देवाः । सरस्वती च सह पुरन्ध्या स्तुत्या । प्रयुक्तानि धीभिः
कर्मभिर्युक्तानि । शृणवन्तु वचनानीमानीति ।
पृथिवी व्याख्याता । तस्या एष निपातो भवत्यैन्द्राग्न्यामृचि ३०

यदिन्द्राग्नी परमस्यां पृथिव्यां मध्यमस्यामवमस्यामुत स्थः ।
अतः परि वृषणावा हि यातमथा सोमस्य पिबतं सुतस्य ॥

इति सा निगदव्याख्याता ।
समुद्रो व्याख्यातः । तस्यैष निपातो भवति पावमान्यामृचि ३१

पवित्रवन्तः परि वाचमासते पितैषां प्रत्नो अभि रक्षति व्रतम् ।
महः समुद्रं वरुणस्तिरो दधे धीरा इच्छेकुर्धरुणेष्वारभम् ॥

पवित्रवन्तो रश्मिवन्तो माध्यमिका देवगणाः पर्यासते माध्यमिकां
वाचम् । मध्यमः पितैषां प्रत्नः पुराणोऽभिरक्षति व्रतं कर्म । महः
समुद्रं वरुणस्तिरोऽन्तर्दधाति । अथ धीराः शक्नुवन्ति

धरुणेषूदकेषु कर्मण आरभमारब्धुम् ।
अज एकपाद् व्याख्यातः । पृथिवी व्याख्याता । समुद्रो व्याख्यातः । तेषामेष निपातो भवत्यपरस्यां बहुदेवतायामृचि ३२

उत नोऽहिर्बुध्न्यः शृणोत्वज एकपात्पृथिवी समुद्रः ।
विश्वे देवा ऋतावृधो हुवानाः स्तुता मन्त्राः कविशस्ता अवन्तु ॥

अपि च नोऽहिर्बुध्न्यः शृणोतु । अजश्चैकपात्पृथिवी च समुद्रश्च सर्वे च देवाः । सत्यवृधो वा । यज्ञवृधो वा । हूयमाना मन्त्रैः स्तुताः । मन्त्राः कविशस्ताः । अवन्तु । मेधाविशस्ताः । दध्यङ् प्रत्यक्तो ध्यानमिति वा । प्रत्यक्तमस्मिन्ध्यानमिति वा । अथर्वा व्याख्यातः । मनुर्मननात् । तेषामेष निपातो भवत्यैन्द्र्यामृचि ३३

यामथर्वा मनुष्पिता दध्यङ् धियमत्नत ।
तस्मिन्ब्रह्माणि पूर्वथेन्द्र उक्था समग्मतार्चन्ननु स्वराज्यम् ॥

यामथर्वा च । मनुश्च पिता मानवानाम् । दध्यङ् च । धियमतनिषत । तस्मिन्ब्रह्माणि कर्माणि पूर्वेन्द्र उक्थानि च संगच्छन्ताम् । अर्चन्योऽनूपास्ते स्वाराज्यम् ३४

अथातो द्युस्थाना देवगणाः । तेषामादित्याः प्रथमागामिनो भवन्ति । आदित्या व्याख्याताः । तेषामेषा भवति ३५

इमा गिर आदित्येभ्यो घृतस्नूः सनाद्राजभ्यो जुह्वा जुहोमि ।
शृणोतु मित्रो अर्यमा भगो नस्तुविजातो वरुणो दक्षो अंशः ॥

घृतस्नूर्घृतप्रस्नाविन्यः । घृतप्रस्नाविण्यः । घृतसानिन्यः । घृतसारिण्यः इति वा । आहुतीरादित्येभ्यश्चिरं जुह्वा जुहोमि ।

चिरं जीवनाय । चिरं राजभ्य इति वा । शृणोतु न इमा गिरो मित्रश्चार्यमा च भगश्च बहुजातश्च धाता दक्षो वरुणोंऽशश्च ।
अंशोंऽशुना व्याख्यातः ।
सप्त ऋषयो व्याख्याताः । तेषामेषा भवति ३६

सप्त ऋषयः प्रतिहिताः शरीरे सप्त रक्षन्ति सदमप्रमादम् ।
सप्तापः स्वपतो लोकमीयुस्तत्र जागृतो अस्वप्नजौ सत्रसदौ च देवौ

सप्त ऋषयः प्रतिहिताः शरीरे । रश्मय आदित्ये । सप्त रक्षन्ति सदमप्रमादम् । संवत्सरमप्रमाद्यन्तः । सप्तापनास्त एव स्वपतो लोकमस्तमितमादित्यं यन्ति । तत्र जागृतोऽस्वप्नजौ सत्रसदौ च देवौ वाय्वादित्यौ । इत्यधिदैवतम् ।
अथाध्यात्मम् । सप्त ऋषयः प्रतिहिताः शरीरे । षडिन्द्रियाणि विद्या सप्तम्यात्मनि । सप्त रक्षन्ति सदमप्रमादम् ।
शरीरमप्रमाद्यन्ति । सप्तापनानीमान्येव स्वपतो लोकमस्तमितमात्मानं यन्ति । तत्र जागृतोऽस्वप्नजौ सत्रसदौ च देवौ प्राज्ञश्चात्मा तैजसश्च । इत्यात्मगतिमाचष्टे ।
तेषामेषापरा भवति ३७

तिर्यग्बिलश्चमस ऊर्ध्वबुध्नो यस्मिन्यशो निहितं विश्वरूपम् ।
अत्रासत ऋषयः सप्त साकं ये अस्य गोपा महतो बभूवुः ॥

तिर्यग्बिलश्चमस ऊर्ध्वबन्धन ऊर्ध्वबोधनो वा । यस्मिन्यशो निहितं विश्वरूपम् । अत्रासत ऋषयः सप्त सहादित्यरश्मयः । ये अस्य गोपा महतो बभूवुः । इत्यधिदैवतम् ।
अथाध्यात्मम् । तिर्यग्बिलश्चमस ऊर्ध्वबन्धन ऊर्ध्वबोधनो वा ।
यस्मिन्यशो निहितं विश्वरूपम् । अत्रासत ऋषयः सप्त सहेन्द्रियाणि । यान्यस्य गोप्तॄणि महतो बभूवुः ।
इत्यात्मगतिमाचष्टे ।

देवा व्याख्याताः । तेषामेषा भवति ३८

दे॒वानां॑ भ॒द्रा सु॑म॒तिर्ऋ॑जूय॒तां दे॒वानां॑ रा॒तिर॒भि नो॒ नि व॑र्तताम् ।
दे॒वानां॑ स॒ख्यमुप॑ सेदिमा व॒यं दे॒वा न॒ आयुः॒ प्र ति॑रन्तु जी॒वसे॑ ॥

देवानां वयं सुमतौ कल्याण्यां मतौ । ऋजुगामिनाम् ।
ऋतुगामिनामिति वा । देवानां दानमभि नो निवर्तताम् ।
देवानां सख्यमुपसीदेम वयम् । देवा न आयुः प्रवर्धयन्तु चिरं
जीवनाय ।
विश्वेदेवाः सर्वेदेवाः । तेषामेषा भवति ३९

ओमा॑सश्चर्षणीधृ॒तो विश्वे॑ देवास॒ आ ग॑त ।
दा॒श्वाँसो॑ दा॒शुषः॑ सु॒तम् ॥

अवितारो वा । अवनीया वा । मनुष्यधृतः सर्वे च देवा
इहागच्छत । दत्तवन्तः । दत्तवतः सुतमिति ।
तदेतदेकमेव वैश्वदेवं गायत्रं तृचं दशतयीषु विद्यते । यत्तु किंचिद्
बहुदैवतं तद् वैश्वदेवानां स्थाने युज्यते । यदेव विश्वलिङ्गमिति
शाकपूणिः । अनत्यन्तगतस्त्वेष उद्देशो भवति ।

ब॒भ्रुरेको॒ ।

इति दश द्विपदा अलिङ्गाः । भूताँशः काश्यप आशिनमेकलिङ्गम्
। अभितष्टीयं सूक्तमेकलिङ्गम् ।
साध्या देवाः साधनात् । तेषामेषा भवति ४०

य॒ज्ञेन॑ य॒ज्ञम॑यजन्त दे॒वास्तानि॒ धर्मा॑णि प्रथ॒मान्या॑सन् ।
ते ह॒ नाकं॑ महि॒मानः॑ सचन्त॒ यत्र॒ पूर्वे॑ सा॒ध्याः सन्ति॑ दे॒वाः ॥

यज्ञेन यज्ञमयजन्त देवाः । अग्निनाग्निमयजन्त देवाः ।

अग्निः पशुरासीत् । तमालभन्त । तेनायजन्त । इति च ब्राह्मणम् ।
तानि धर्माणि प्रथमान्यासन् । ते ह नाकं महिमानः संसेव्यन्त । यत्र पूर्वे साध्याः सन्ति देवाः साधनाः । द्युस्थानो देवगण इति नैरुक्ताः । पूर्वं देवयुगमित्याख्यानम् ।
वसवो यद् विवसते सर्वम् । अग्निर्वसुभिर्वासव इति समाख्या । तस्मात्पृथिवीस्थानाः । इन्द्रो वसुभिर्वासव इति समाख्या । तस्मान्मध्यस्थानाः । वसव आदित्यरश्मयो विवासनात् । तस्माद् द्युस्थानाः । तेषामेषा भवति ४१

सुगा वो देवाः सदनमकर्म य आजग्मुः सवनमिदं जुषाणाः ।
जक्षिवांसः पपिवांसश्च विश्वेऽस्मे धत्त वसवो वसूनि ॥

स्वागमनानि वो देवाः सुपथान्यकर्म य आगच्छत सवनानीमानि । जुषाणाः खादितवन्तः । पीतवन्तश्च । सर्वेऽस्मासु धत्त वसवो वसूनि ।
तेषामेषापरा भवति ४२

ज्मया अत्र वसवो रन्त देवा उरावन्तरिक्षे मर्जयन्त शुभ्राः ।
अर्वाक्पथ उरुज्रयः कृणुध्वं श्रोता दूतस्य जग्मुषो नो अस्य ॥

ज्मया अत्र वसवोऽरमन्त देवाः । ज्मा पृथिवी । तस्यां भवा उरौ चान्तरिक्षे मर्जयन्त गमयन्त रमयन्त । शुभ्राः शोभमानाः । अर्वाच एनान्पथो बहुजवाः कुरुध्वम् । शृणुत दूतस्य जग्मुषो नोऽस्याग्नेः ।
वाजिनो व्याख्याताः । तेषामेषा भवति ४३

शं नो भवन्तु वाजिनो हवेषु देवताता मितद्रवः स्वर्काः ।
जम्भयन्तोऽहिं वृकं रक्षांसि सनेम्यस्मद्युयवन्नमीवाः ॥

सुखा नो भवन्तु वाजिनो ह्वानेषु देवतातौ यज्ञे । मितद्रवः
सुमितद्रवः । स्वर्काः स्वञ्चना इति वा । स्वर्चना इति वा ।
स्वर्चिष इति वा । जम्भयन्तोऽहिं च वृकं च रक्षांसि च ।
क्षिप्रमस्मद्यावयन्तु । अमीवा देवाश्वा इति वा ।
देवपत्न्यो देवानां पत्न्यः । तासामेषा भवति ४४

देवानां पत्नीरुशतीरवन्तु नः प्रावन्तु नस्तुजये वाजसातये ।
याः पार्थिवासो या अपामपि व्रते ता नो देवीः सुहवाः शर्म यच्छत

देवानां पत्न्य उशत्योऽवन्तु नः । प्रावन्तु नः । अपत्यजननाय
चान्नसंसननाय च । याः पार्थिवासो या अपामपि व्रते कर्मणि ता
नो देव्यः सुहवाः शर्म यच्छन्तु शरणम् ।
तासामेषापरा भवति ४५

उत ग्ना व्यन्तु देवपत्नीरिन्द्राण्य१ ग्नाय्यश्विनी राट् ।
आ रोदसी वरुणानी शृणोतु व्यन्तु देवीर्य ऋतुर्जनीनाम् ॥

अपि च ग्ना व्यन्तु देवपत्न्यः । इन्द्राणीन्द्रस्य पत्नी । अग्नाय्यग्नेः
पत्नी । अश्विन्यश्विनोः पत्नी । राड् राजते । रोदसी रुद्रस्य पत्नी
। वरुणानी च वरुणस्य पत्नी । व्यन्तु देव्यः कामयन्तां य
ऋतुकालो जायानां य ऋतुकालो जायानाम् ४६

अथातो द्युस्थाना वसातिषु स्मेहेह जाता प्रातर्युजा
प्रातर्यजध्वमुषस्तच्चित्रमेता उत्याः सुकिंशुकं
वृषाकपाय्यपागूहंस्त्वष्टा दुहित्रे सविता विश्वारूपाणि
प्रातर्जितमुदुत्यं चित्रं शुक्रं ते पथस्पथ इदं विष्णुर्विश्वानरो
व्याख्यातो विश्वानरस्य येना पावकेति चतुष्कं केश्यऽग्निं त्रयः
केशिनः पुनरेहि यस्मिन्वृक्षे पावीरवी यदिन्द्राग्नी पवित्रवन्त उत

नोऽहिर्यामथर्वाथातो द्युस्थाना देवगणा इमा गिरः सप्त ऋषयस्तिर्यग्बिलो देवानां भद्रौमासो यज्ञेन सुगा वा देवा ज्मया अत्र शं नो भवन्तु देवानां पत्नीरुतग्ना व्यन्त्विति षट्चत्वारिंशत् ॥

इत्युत्तरषट्के षष्ठोऽध्यायः

इति निरुक्ते द्वादशोऽध्यायः समाप्तः

इति दैवतं काण्डमुत्तरार्धं च समाप्तम्

# अथ परिशिष्टम्

## अथ त्रयोदशोऽध्यायः

अथेमा अतिस्तुतय इत्याचक्षते । अपि वा संप्रत्यय एव स्यात् । माहाभाग्याद् देवतायाः । सोऽग्निमेव प्रथममाह ।

त्वमग्ने द्युभिस्त्वमाशुशुक्षणिः । इति यथैतस्मिन्सूक्ते ।
न हि त्वदारे निमिषश्च नेशे । इति वरुणस्य ।

अथैषेन्द्रस्य १

यद्द्याव इन्द्र ते शतं शतं भूमीरुत स्युः ।
न त्वा वज्रिन्त्सहस्रं सूर्या अनु न जातमष्ट रोदसी ॥

यदि त इन्द्र शतं दिवः शतं भूमयः प्रतिमानानि स्युर्न त्वा वज्रिन्त्सहस्रमपि सूर्या न द्यावापृथिव्यावप्यभ्यश्नुवीतामिति ।
अथैषादित्यस्य २

यदुदञ्चो वृषाकपे गृहमिन्द्राजगन्तन ।
क्व १ स्य पुल्वघो मृगः कमगञ्जनयोपनो विश्वस्मादिन्द्र उत्तरः ॥

यदुदञ्चो वृषाकपे गृहमिन्द्राजगमत । क्व स्य पुल्वघो मृगः । क्व स बह्वादी मृगः । मृगो मार्ष्टेर्गतिकर्मणः । कमगमद्देशं जनयोपनः । सर्वस्माद्य इन्द्र उत्तरस्तमेतद्ब्रूम आदित्यम् ।
अथैषादित्यरश्मीनाम् ३

वि हि सोतोरसृक्षत नेन्द्रं देवममंसत ।
यत्रामदद्वृषाकपिरर्यः पुष्टेषु मत्सखा विश्वस्मादिन्द्र उत्तरः ॥

व्यसृक्षत हि प्रसवाय । न चेन्द्रं देवममंसत ।
यत्रामाद्यद्वृषाकपिः । अर्य ईश्वरः । पुष्टेषु पोषेषु । मत्सखा मम

सखा । मदनसखा । ये नः सखायस्तैः सहेति वा ।
सर्वस्माद्य इन्द्र उत्तरस्तमेतद्ब्रूम आदित्यम् । अथैषाश्विनोः ४

सृण्येव जर्भरी तुर्फरीतू नैतोशेव तुर्फरी पर्फरीका ।
उदन्यजेव जेमना मदेरू ता मे जराय्वजरं मरायु ॥

सृण्येवेति द्विविधा सृणिर्भवति । भर्ता च हन्ता च । तथाश्विनौ
चापि भर्तारौ । जर्भरी भर्तारावित्यर्थः । तुर्फरीतू हन्तारौ ।
नैतोशेव तुर्फरी पर्फरीका । नितोशस्यापत्यं नैतोशम् । नैतोशेव
तुर्फरी क्षिप्रहन्तारौ । उदन्यजेव जेमना मदेरू ।
उदन्यजेवेत्युदकजे इव । रत्ने सामुद्रे चान्द्रमसे वा । जेमने
जयमने । जेमना मदेरू । ता मे जराय्वजरं मरायु ।
एतज्जरायुजं शरीरं शरदमजीर्णम् ।
अथैषा सोमस्य ५

तरत्स मन्दी धावति धारा सुतस्यान्धसः ।
तरत्स मन्दी धावति ॥

तरति स पापं सर्वं मन्दी यः स्तौति धावति गच्छत्यूर्ध्वां गतिम् ।
धारा सुतस्यान्धसः । धारयाभिषुतस्य सोमस्य मन्त्रपूतस्य वाचा
स्तुतस्य । अथैषा यज्ञस्य ६

चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्तहस्तासो अस्य ।
त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्याँ आ विवेश ॥

चत्वारि शृङ्गेति वेदा वा एत उक्ताः । त्रयोऽस्य पादा इति
सवनानि त्रीणि ।
द्वे शीर्षे प्रायणीयोदयनीये । सप्त हस्तासः सप्त छन्दाँसि । त्रिधा
बद्धस्त्रेधा बद्धो मन्त्रब्राह्मणकल्पैः । वृषभो रोरवीति ।

रोरवणमस्य सवनक्रमेण ऋग्भिर्यजुर्भिः सामभिर्यदेनमृग्भिः शंसन्ति यजुर्भिर्यजन्ति सामभिः स्तुवन्ति । महो देव इत्येष हि महान्देवो यद्यज्ञो मर्त्याँ आविवेशेति । एष हि मनुष्यानाविशति यजनाय । तस्योत्तराभूयसे निर्वचनाय ७

स्वर्यन्तो नापेक्षन्त आ द्यां रोहन्ति रोदसी ।
यज्ञं ये विश्वतोधारं सुविद्वाँसो वितेनिरे ॥

स्वर्गच्छन्त ईजाना वा नेक्षन्ते । तेऽमुमेव लोकं गतवन्तमीक्षन्तमिति । आ द्यां रोहन्ति रोदसी । यज्ञं ये विश्वतोधारं सर्वतोधारं सुविद्वांसो वितेनिर इति । अथैषा वाचः प्रवल्हितेव ८

चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः ।
गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति ॥

चत्वारि वाचः परिमितानि पदानि । तानि विदुर्ब्राह्मणा ये मेधाविनः । गुहायां त्रीणि निहितानि नार्थं वेदयन्ते । गुहा गूहतेः । तुरीयं त्वरतेः । कतमानि तानि चत्वारि पदानि । ओंकारो महाव्याहृतयश्चेत्यार्षम् । नामाख्याते चोपसर्गनिपाताश्चेति वैयाकरणाः । मन्त्रः कल्पो ब्राह्मणं चतुर्थी व्यावहारिकीति याज्ञिकाः । ऋचो यजूंषि सामानि चतुर्थी व्यावहारिकीति नैरुक्ताः । सर्पाणां वाग्वयसां क्षुद्रस्य सरीसृपस्य चतुर्थी व्यावहारिकीत्येके । पशुषु तूणवेषु मृगेष्वात्मनि चेत्यात्मप्रवादाः । अथापि ब्राह्मणं भवति । सा वै वाक्सृष्टा चतुर्धा व्यभवत् । एष्वेव लोकेषु त्रीणि पशुषु तुरीयम् । या पृथिव्यां साग्नौ सा रथन्तरे । यान्तरिक्षे सा वायौ सा वामदेव्ये । या दिवि सादित्ये सा बृहति सा स्तनयित्नौ । अथ पशुषु ततो या वागत्यरिच्यत तां

ब्राह्मणेष्वदधुः । तस्माद्ब्राह्मणा उभयीं वाचं वदन्ति या च देवानां या च मनुष्याणाम् । इति । अथैषाक्षरस्य ९

ऋचो अक्षरे परमे व्योमन्यस्मिन्देवा अधि विश्वे निषेदुः ।
यस्तन्न वेद किमृचा करिष्यति य इत्तद्विदुस्त इमे समासते ॥

ऋचो अक्षरे परमे व्यवने यस्मिन्देवा अधिनिषण्णाः सर्वे । यस्तन्न वेद किं स ऋचा करिष्यति । य इत्तद्विदुस्त इमे समासत इति विदुष उपदिशति । कतमत्तदेतदक्षरम् । ओमित्येषा वागिति शाकपूणिः । ऋचश्च ह्यक्षरे परमे व्यवने धीयन्ते नानादेवतेषु च मन्त्रेषु । एतद्ध वा एतदक्षरं यत्सर्वां त्रयीं विद्यां प्रतिप्रति । इति च ब्राह्मणम् १०

आदित्य इति पुत्रः शाकपूणेः । एषर्ग्भवति यदेनमर्चन्ति प्रत्यृचः सर्वाणि भूतानि तस्य यदन्यन्मन्त्रेभ्यस्तदक्षरं भवति । रश्मयोऽत्र देवा उच्यन्ते य एतस्मिन्नधिनिषण्णा इत्यधिदैवतम् । अथाध्यात्मम् । शरीरमत्र ऋगुच्यते यदेनेनार्चन्ति प्रत्यृचः सर्वाणीन्द्रियाणि तस्य यदविनाशिधर्म तदक्षरं भवति । इन्द्रियाण्यत्र देवा उच्यन्ते यान्यस्मिन्नात्मन्येकं भवन्तीत्यात्मप्रवादाः ११

अक्षरं न क्षरति । न क्षीयते वा । अक्षयं भवति । वाचोऽक्ष इति वा । अक्षो यानस्याञ्जनात् । तत्प्रकृतीतरद्वर्तनसामान्यादिति । अयं मन्त्रार्थचिन्ताभ्यूहोऽभ्यूळ्हः । अपि श्रुतितोऽपि तर्कतः । न तु पृथक्त्वेन मन्त्रा निर्वक्तव्याः । प्रकरणश एव तु निर्वक्तव्याः । न ह्येषु प्रत्यक्षमस्त्यनृषेरतपसो वा । पारोवर्यवित्सु तु खलु वेदितृषु भूयोविद्यः प्रशस्यो भवतीत्युक्तं पुरस्तात् । मनुष्या वा ऋषिषूत्क्रामत्सु देवानब्रुवन् । को न ऋषिर्भविष्यतीति । तेभ्य

एतं तर्कमृषिं प्रायच्छन्मन्त्रार्थचिन्ताभ्यूहमभ्यूळ्हम् । तस्माद्यदेव किंचानूचानोऽभ्यूहत्यार्षं तद्भवति १२

हृदा तष्टेषु मनसो जवेषु यद्ब्राह्मणाः संयजन्ते सखायः ।
अत्राह त्वं वि जहुर्वेद्याभिरोहब्रह्माणो वि चरन्त्यु त्वे ॥

हृदा तष्टेषु मनसां प्रजवेषु यद्ब्राह्मणाः संयजन्ते समानाख्याना ऋत्विजः । अत्राह त्वं विजहुर्वेद्याभिर्वेदितव्याभिः प्रवृत्तिभिः । ओहब्रह्माण ऊहब्रह्माणः । ऊह एषां ब्रह्मेति वा । सेयं विद्या श्रुतिमतिबुद्धिः । तस्यास्तपसा पारमीप्सितव्यम् । तदिदमायुरिच्छता न निर्वक्तव्यम् । तस्माच्छन्दस्सु शेषा उपेक्षितव्याः । अथागमो यां यां देवतां निराह तस्यास्तस्यास्ताद्भाव्यमनुभवत्यनुभवति १३

व्याख्यातं दैवतं यज्ञाङ्गं च । अथात ऊर्ध्वमार्गगतिं व्याख्यास्यामः ।

सूर्य आत्मा ।

इत्युदितस्य हि कर्मद्रष्टा । अथैतदनुप्रवदन्ति । अथैतं महान्तमात्मानमेषर्ग्गणः प्रवदति ।

इन्द्रं मित्रं वरुणमग्निमाहुः । इति ।

अथैष महानात्मात्मजिज्ञासयात्मानं प्रोवाच ।

अग्निरस्मि जन्मना जातवेदाः ।

अहमस्मि प्रथमजा इत्येताभ्याम् १४

अग्निरस्मि जन्मना जातवेदा घृतं मे चक्षुरमृतं म आसन् ।
अर्कस्त्रिधातू रजसो विमानोऽजस्रो घर्मो हविरस्मि नाम ॥

अहमस्मि प्रथमजा ऋतस्य पूर्वं देवेभ्यो अमृतस्य नाम ।
यो मा ददाति स इदेवमावद अहमन्नमन्नमदन्तमद्मि ॥

इति स ह ज्ञात्वा प्रादुर्बभूव । एवं तं
व्याजहारायन्तमात्मानमध्यात्मजमन्तिकमन्यस्मा आचक्ष्वेति १५

अपश्यं गोपामनिपद्यमानमा च परा च पथिभिश्चरन्तम् ।
स सध्रीचीः स विषूचीर्वसान आ वरीवर्ति भुवनेष्वन्तः ॥

आवरीवर्ति भुवनेष्वन्तरिति । अथैष महानात्मा सत्त्वलक्षणस्तत्परं
तद्ब्रह्म तत्सत्यं तत्सलिलं तदव्यक्तं तदस्पर्शं तदरूपं तदरसं
तदगन्धं तदमृतं तच्छुक्लं तन्निष्ठो भूतात्मा । सैषा भूतप्रकृतिरित्येके
। तत्क्षेत्रं तज्ज्ञानात्क्षेत्रज्ञमनुप्राप्य निरात्मकम् । अथैष महानात्मा
त्रिविधो भवति । सत्त्वं रजस्तम इति । सत्त्वं तु मध्ये विशुद्धं
तिष्ठति । अभितो रजस्तमसी इति कामद्वेषस्तम इत्यविज्ञातस्य
विशुध्यतो विभूतिं कुर्वतः क्षेत्रज्ञपृथक्त्वाय कल्पते ।
प्रतिभातिलिङ्गो महानात्मा तमोलिङ्गो विद्या प्रकाशलिङ्गस्तमः ।
अपि निश्चयलिङ्ग आकाशः १६

आकाशगुणः शब्दः । आकाशाद्वायुर्द्विगुणः स्पर्शेन ।
वायोर्ज्योतिस्त्रिगुणं रूपेण । ज्योतिष आपश्चतुर्गुणा रसेन । अद्भ्यः
पृथिवी पञ्चगुणा गन्धेन । पृथिव्या भूतग्रामस्थावरजङ्गमाः ।
तदेतदहर्युगसहस्रं जागर्ति । तस्यान्ते सुषुप्स्यन्नङ्गानि प्रत्याहरति
। भूतग्रामाः पृथिवीमपि यन्ति । पृथिव्यपः । आपो ज्योतिषम्
। ज्योतिर्वायुम् । वायुराकाशम् । आकाशो मनः । मनो
विद्याम् । विद्या महान्तमात्मानम् । महानात्मा प्रतिभाम् ।
प्रतिभा प्रकृतिम् । सा स्वपिति युगसहस्रं रात्रिः ।
तावेतावहोरात्रावजस्रं परिवर्तेते । स कालस्तदेतदहर्भवति ।

युगसहस्रपर्यन्तमहर्यद्ब्रह्मणो विदुः ।
रात्रिं युगसहस्रान्तां तेऽहोरात्रविदो जनाः ॥ इति ॥ १७

तं परिवर्तमानमन्योऽनुप्रवर्तते । स्रष्टा द्रष्टा
विभक्तातिमात्रोऽहमिति गम्यते । स मिथ्यादर्शनेदं पावकं
महाभूतेषु चिरोरावाकाशाद्वायोः प्राणश्चक्षुश्च वक्तारं च तेजसोऽद्भ्यः
स्नेहं पृथिव्या मूर्तिः । पार्थिवाँस्त्वष्टौ गुणान्विद्यात् ।
त्रीन्मातृतस्त्रीन्पितृतः । अस्थिस्नायुमज्जानः पितृतः ।
त्वङ्मांसशोणितानि मातृतः । अन्नपानमित्यष्टौ । सोऽयं पुरुषः
सर्वमयः सर्वज्ञानोऽपि क्लृप्तः १८

स यद्यनुरुध्यते तद्भवति । यदि धर्ममनुरुध्यते तद्देवो भवति ।
यदि ज्ञानमनुरुध्यते तदमृतो भवति । यदि काममनुरुध्यते
संच्यवते । इमां योनिं संदध्यात् । तदिदमत्र मतम् । श्लेष्मा
रेतसः संभवति । श्लेष्मणो रसः । रसाच्छोणितम् ।
शोणितान्माँसम् । माँसान्मेदः । मेदसः स्नावा ।
स्नाव्नोऽस्थीनि । अस्थिभ्यो मज्जा । मज्जातो रेतः । तदिदं
योनौ रेतः सिक्तं पुरुषः संभवति । शुक्रातिरेके पुमान्भवति ।
शोणितातिरेके स्त्री भवति । द्वाभ्यां समेन नपुंसको भवति ।
शुक्रेण भिन्नेन यमो भवति ।
शुक्रशोणितसंयोगान्मातृपितृसंयोगाच्च । तत्कथमिदं शरीरं परं
संयम्यते । सौम्यो भवति । एकरात्रोषितं कललं भवति ।
पञ्चरात्राद् बुद्बुदाः । सप्तरात्रात्पेशी । द्विसप्तरात्रादर्बुदः ।
पञ्चविंशतिरात्रः स्वस्थितो घनो भवति । मासमात्रात्कठिनो
भवति । द्विमासाभ्यन्तरे शिरः संपद्यते । मासत्रयेण
ग्रीवाव्यादेशः । मासचतुष्केण त्वग्व्यादेशः । पञ्चमे मासे
नखरोमव्यादेशः । षष्ठे मुखनासिकाक्षिश्रोत्रं च संभवति ।

सप्तमे चलनसमर्थो भवति । अष्टमे बुध्याध्यवस्यति । नवमे सर्वाङ्गसंपूर्णो भवति ।

मृतश्चाहं पुनर्जातो जातश्चाहं पुनर्मृतः ।
नाना योनिसहस्राणि मयोषितानि यानि वै ॥
आहारा विविधा भुक्ताः पीता नानाविधाः स्तनाः ।
मातरो विविधा दृष्टाः पितरः सुहृदस्तथा ॥
अवाङ्मुखः पीड्यमानो जन्तुश्चैव समन्वितः ।
सांख्यं योगं समभ्यस्येत्पुरुषं वा पञ्चविंशकम् ॥ इति ।

ततश्च दशमे मासे प्रजायते । जातश्च वायुना स्पृष्टो न स्मरति जन्ममरणम् । अन्ते च शुभाशुभं कर्मैतच्छरीरस्य प्रामाण्यम् १९

अष्टोत्तरं संधिशतमष्टाकपालं शिरः संपद्यते । षोडश वपापलानि । नव स्नायुशतानि । सप्त शतं पुरुषस्य मर्मणाम् । अर्धचतस्रो रोमाणि कोट्यः । हृदयं ह्यष्टकपालानि । द्वादशकपालानि जिह्वा । वृषणौ ह्यष्टसुपर्णौ । तथोपस्थगुदपाय्वेतन्मूत्रपुरीषं कस्मादाहारपानसिक्तत्वादनुपचितकर्माणावन्योन्यं जयेते इति । तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च । महत्यज्ञानतमसि मग्नौ जरामरणक्षुत्पिपासाशोकक्रोधलोभमोहमदभयमत्सरहर्षविषादेर्ष्या-सूयात्मकैर्द्वन्द्वैरभिभूयमानः सोऽस्मादार्जवं जवीभावानां तन्निर्मुच्यते । सोऽस्मापान्नं महाभूमिकावच्छरीरान्निमेषमात्रैः प्रक्रम्य प्रकृतिरधिपरीत्य तैजसं शरीरं कृत्वा कर्मणोऽनुरूपं फलमनुभूय तस्य संक्षये पुनरिमँल्लोकं प्रतिपद्यते २०

अथ ये हिंसामाश्रित्य विद्यामुत्सृज्य महत्तपस्तेपिरे चिरेण वेदोक्तानि वा कर्माणि कुर्वन्ति ते धूममभिसंभवन्ति । धूमाद्रात्रिम् । रात्रेरपक्षीयमाणपक्षम् । अपक्षीयमाणपक्षाद् दक्षिणायनम् ।

दक्षिणायनात्पितृलोकम् । पितृलोकाच्चन्द्रमसम् । चन्द्रमसो वायुम् । वायोर्वृष्टिम् । वृष्टेरोषधयश्चैतद्भूत्वा तस्य संक्षये पुन-रेवेमँल्लोकं प्रतिपद्यते २१

अथ ये हिंसामुत्सृज्य विद्यामाश्रित्य महत्तपस्तेपिरे ज्ञानोक्तानि वा कर्माणि कुर्वन्ति तेऽर्चिरभिसंभवन्ति । अर्चिषोऽहः । अह्न आपूर्यमाणपक्षम् । आपूर्यमाणपक्षादुदगयनम् । उदगयनाद्देवलोकम् । देवलोकादादित्यम् । आदित्याद्वैद्युतम् । वैद्युतान्मानसम् । मानसः पुरुषो भूत्वा ब्रह्मलोकमभिसंभवन्ति । ते न पुनरावर्तन्ते । शिष्टा दन्दशूका यत इदं न जानन्ति तस्मादिदं वेदितव्यम् । अथाप्याह २२

न तं विदाथ य इमा जजानान्यद्युष्माकमन्तरं बभूव ।
नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरन्ति ॥

न तं विद्यया विदुषो यमेवं विद्वाँसो वदन्ति । अक्षरं ब्रह्मणस्पतिमन्यद्युष्माकमन्तरमन्यदेषामन्तरं बभूवेति । नीहारेण प्रावृतास्तमसा जल्प्या चासुतृप उक्थशासः प्राणं सूर्यं यत्पथगामिनश्चरन्ति । अविद्वाँसः क्षेत्रज्ञमनुप्रवदन्ति । अथाहो विद्वाँसः क्षेत्रज्ञोऽनुकल्पते । तस्य तपसा सहाप्रमादमेति । अथाप्तव्यो भवति । तेनासन्ततमिच्छेत् । तेन सख्यमिच्छेत् । एष हे सखा श्रेष्ठः संजानाति भूतं भवद्भविष्यदिति । ज्ञाता कस्मात् । ज्ञायतेः । सखा कस्मात् । सख्यतेः । सह भूतेन्द्रियैः शेरते । महाभूतानि सेन्द्रियाणि । प्रज्ञया कर्म कारयतीति । तस्य यदापः प्रतिष्ठाशीलमुपशम आत्मा ब्रह्मेति स ब्रह्मभूतो भवति । साक्षिमात्रो व्यवतिष्ठतेऽबन्धो ज्ञानकृतः ॥ अथात्मनो महतः प्रथमं भूतानामधेयान्यनुक्रमिष्यामः २३

हंसः । घर्मः । यज्ञः । वेनः । मेधः । कृमिः । भूमिः ।
विभुः । प्रभुः । शंभुः । राभुः । वधकर्मा । सोमः ।
भूतम् । भुवनम् । भविष्यत् । आपः । महत् । व्योम ।
यशः । महः । स्वर्णीकम् । स्मृतीकम् । स्वृतीकम् ।
सतीकम् । सतीनम् । गहनम् । गभीरम् । गह्वरम् । कम्
। अन्नम् । हविः । सद्म । सदनम् । ऋतम् । योनिः ।
ऋतस्य योनिः । सत्यम् । नीरम् । हविः । रयिः । सत् ।
पूर्णम् । सर्वम् । अक्षितम् । बर्हिः । नाम । सर्पिः ।
अपः । पवित्रम् । अमृतम् । इन्दुः । हेम । स्वः । सर्गाः
। शम्बरम् । अम्बरम् । वियत् । व्योम । बर्हिः । धन्व
। अन्तरिक्षम् । आकाशम् । आपः । पृथिवी । भूः ।
स्वयम्भूः । अध्वा । पुष्करम् । सगरः । समुद्रः । तपः ।
तेजः । सिन्धुः । अर्णवः । नाभिः । ऊधः । वृक्षः । तत्
। यत् । किम् । ब्रह्म । वरेण्यम् । हंसः । आत्मा ।
भवन्ति । वधन्ति । अध्वानम् । यद्वाहिष्ट्या । शरीराणि ।
अव्ययं च संस्कुरुते । यज्ञः । आत्मा । भवति । यदेनं
तन्वते ।

अथैतं महान्तमात्मानमेतानि सूक्तान्येता ऋचोऽनुप्रवदन्ति २४

सोमः पवते जनिता मतीनां जनिता दिवो जनिता पृथिव्याः ।
जनिताग्नेर्जनिता सूर्यस्य जनितेन्द्रस्य जनितोत विष्णोः ॥

सोमः पवते जनयिता मतीनां जनयिता दिवो जनयिता पृथिव्या
जनयिताग्नेर्जनयिता सूर्यस्य जनयितेन्द्रस्य जनयितोत विष्णोः २५

ब्रह्मा देवानां पदवीः कवीनामृषिर्विप्राणां महिषो मृगाणाम् ।
श्येनो गृध्राणां स्वधितिर्वनानां सोमः पवित्रमत्येति रेभन् ॥

ब्रह्मा देवानामिति । एष हि ब्रह्मा भवति । देवानां देवनकर्मणामादित्यरश्मीनाम् । पदवीः कवीनामिति । एष हि पदं वेत्ति । कवीनां कवीयमानानामादित्यरश्मीनाम् । ऋषिर्विप्राणामिति । एष हि ऋषिणो भवति । विप्राणां व्यापनकर्मणामादित्यरश्मीनाम् । महिषो मृगाणामिति । एष हि महान्भवति । मृगाणां मार्गणकर्मणामादित्यरश्मीनाम् । श्येनो गृध्राणामिति । श्येन आदित्यो भवति । श्यायतेर्गतिकर्मणः । गृध्र आदित्यो भवति । गृध्यतेः स्थानकर्मणः । यत एतस्मिंस्तिष्ठति । स्वधितिर्वनानामिति । एष हि स्वयं कर्माण्यादित्यो धत्ते । वनानां वननकर्मणामादित्यरश्मीनाम् । सोमः पवित्रमत्येति रेभन्निति । एष हि पवित्रं रश्मीनामत्येति । स्तूयमान एष एवैतत्सर्वमक्षरम् । इत्यधिदैवतम् । अथाध्यात्मम् । ब्रह्मा देवानामिति । अयमपि ब्रह्मा भवति । देवानां देवनकर्मणामिन्द्रियाणाम् । पदवीः कवीनामिति । अयमपि पदं वेत्ति । कवीनां कवीयमानानामिन्द्रियाणाम् । ऋषिर्विप्राणामिति । अयमपि ऋषिणो भवति । विप्राणां व्यापनकर्मणामिन्द्रियाणाम् । महिषो मृगाणामिति । अयमपि महान्भवति । मृगाणां मार्गणकर्मणामिन्द्रियाणाम् । श्येनो गृध्राणामिति । श्येन आत्मा भवति । श्यायतेर्ज्ञानकर्मणः । गृध्राणीन्द्रियाणि । गृध्यतेर्ज्ञानकर्मणः । यत एतस्मिंस्तिष्ठन्ति । स्वधितिर्वनानामिति । अयमपि स्वयं कर्माण्यात्मनि धत्ते । वनानां वननकर्मणामिन्द्रियाणाम् । सोमः पवित्रमत्येति रेभन्निति । अयमपि पवित्रमिन्द्रियाण्यत्येति । स्तूयमानोऽयमेवैतत्सर्वमनुभवति । इत्यात्मगतिमाचष्टे २६

ति॒स्रो वाच॑ ईरयति॒ प्र वह्नि॑र्ऋ॒तस्य॑ धी॒तिं ब्रह्म॑णो मनी॒षाम् ।

गावो यन्ति गोपतिं पृच्छमानाः सोमं यन्ति मतयो वावशानाः ॥

वह्निरादित्यो भवति । स तिस्रो वाचः प्रेरयति । ऋचो यजूंषि सामान्यृतस्यादित्यस्य कर्माणि ब्रह्मणो मतानि । एष एवैतत्सर्वमक्षरम् । इत्यधिदैवतम् ।
अथाध्यात्मम् । वह्निरात्मा भवति । स तिस्रो वाच ईरयति । विद्यामतिबुद्धिमतामृतस्यात्मनः कर्माणि ब्रह्मणो मतानि । अयमेवैतत्सर्वमनुभवति । इत्यात्मगतिमाचष्टे २७

सोमं गावो धेनवो वावशानाः सोमं विप्रा मतिभिः पृच्छमानाः ।
सोमः सुतः पूयते अज्यमानः सोमे अर्कास्त्रिष्टुभः सं नवन्ते ॥

एत एव सोमं गावो धेनवो रश्मयो वावश्यमानाः कामयमाना आदित्यं यन्ति । एवमेव सोमं विप्रा रश्मयो मतिभिः पृच्छमानाः कामयमाना आदित्यं यन्ति । एवमेव सोमः सुतः पूयते अज्यमानः । एतमेवार्काश्च त्रिष्टुभश्च संनवन्ते । तत एतस्मिन्नादित्य एकं भवन्ति । इत्यधिदैवतम् ।
अथाध्यात्मम् । एत एव सोमं गावो धेनव इन्द्रियाणि वावश्यमानानि कामयमानान्यात्मानं यन्ति । एवमेव सोमं विप्रा इन्द्रियाणि मतिभिः पृच्छमानानि कामयमानान्यात्मानं यन्ति । एवमेव सोमः सुतः पूयते अज्यमानः । इममेवात्मा च सप्त ऋषयश्च संनवन्ते । तान्येतस्मिन्नात्मन्येकं भवन्ति । इत्यात्मगतिमाचष्टे २८

अक्रान्त्समुद्रः प्रथमे विधर्मञ्जनयन्प्रजा भुवनस्य राजा ।
वृषा पवित्रे अधि सानो अव्ये बृहत्सोमो वावृधे सुवान इन्दुः ॥

अत्यक्रमीत्समुद्र आदित्यः परमे व्यवने वर्षकर्मणा जनयन्प्रजा भुवनस्य राजा सर्वस्य राजा । वृषा पवित्रे अधि सानो अव्ये

बृहत्सोमो वावृधे सुवान इन्दुः । इत्यधिदैवतम् ।
अथाध्यात्मम् । अत्यक्रमीत्समुद्र आत्मा परमे व्यवने ज्ञानकर्मणा जनयन्प्रजा भुवनस्य राजा सर्वस्य राजा । वृषा पवित्रे अधि सानो अव्ये बृहत्सोमो वावृधे सुवान इन्दुः । इत्यात्मगतिमाचष्टे २९

म॒हत्तत्सोमो॑ महि॒षश्च॑कारा॒पां यद्गर्भोऽवृ॑णीत दे॒वान् ।
अद॑धा॒दिन्द्रे॒ पव॑मान॒ ओजोऽज॑नय॒त्सूर्ये॒ ज्योति॒रिन्दुः ॥

महत्तत्सोमो महिषश्चकारापां यद्गर्भोऽवृणीत देवानामाधिपत्यम् । अदधादिन्द्रे पवमान ओजः । अजनयत्सूर्ये ज्योतिरिन्दुरादित्यः । इन्दुरात्मा ३०

वि॒धुं द॑द्रा॒णं सम॑ने ब॒हूनां युवा॑नं॒ सन्तं॑ पलि॒तो ज॑गार ।
दे॒वस्य॑ पश्य॒ काव्यं॑ महि॒त्वाद्या म॒मार॒ स ह्यः समा॑न ॥

विधुं विधमनशीलम् । दद्राणं दमनशीलम् । युवानं चन्द्रमसम् । पलित आदित्यो गिरति । सद्यो म्रियते । स दिवा समुदिता । इत्यधिदैवतम् ।
अथाध्यात्मम् । विधुं विधमनशीलम् । दद्राणं दमनशीलम् । युवानं महान्तम् । पलित आत्मा गिरति । रात्रौ म्रियते । रात्रिः समुदिता । इत्यात्मगतिमाचष्टे ३१

सा॒क॒ञ्जानां॑ स॒प्तथ॑माहुरेक॒जं षळिद्य॒मा ऋष॑यो देव॒जा इति॑ ।
तेषा॑मि॒ष्टानि॒ विहि॑तानि धाम॒शः स्था॒त्रे रे॑जन्ते॒ विकृ॑तानि रूप॒शः ॥

सहजातानां षण्णामृषीणामादित्यः सप्तमः । तेषामिष्टानि वा कान्तानि वा क्रान्तानि वा गतानि वा मतानि वा नतानि वा । अद्भिः सह संमोदन्ते । यत्रैतानि सप्तऋषीणानि ज्योतींषि तेभ्यः

पर आदित्यः । तान्येतस्मिन्नेकं भवन्ति । इत्यधिदैवतम् ।
अथाध्यात्मम् । सहजातानां षण्णामिन्द्रियाणामात्मा सप्तमः ।
तेषामिष्टानि वा कान्तानि वा क्रान्तानि वा गतानि वा मतानि वा
नतानि वा । अन्नेन सह संमोदन्ते । यत्रेमानि
सप्तऋषीणानीन्द्रियाण्येभ्यः पर आत्मा । तान्येतस्मिन्नेकं भवन्ति
। इत्यात्मगतिमाचष्टे ३२

स्त्रियः सतीस्ताँ उ मे पुंस आहुः पश्यदक्षण्वान्न वि चेतदन्धः ।
कविर्यः पुत्रः स ईमा चिकेत यस्ता विजानात्स पितुष्पितासत् ॥

स्त्रिय एवैताः शब्दस्पर्शरूपरसगन्धहारिण्यस्ता अमुं पुंशब्दे
निराहारः प्राण इति पश्यन्कष्टान्न विजानात्यन्धः । कविर्यः पुत्रः
स इमा जानाति । यः स इमा जानाति स पितुष्पितासत् ।
इत्यात्मगतिमाचष्टे ३३

सप्तार्धगर्भा भुवनस्य रेतो विष्णोस्तिष्ठन्ति प्रदिशा विधर्मणि ।
ते धीतिभिर्मनसा ते विपश्चितः परिभुवः परि भवन्ति विश्वतः ॥

सप्तैतानादित्यरश्मीनयमादित्यो गिरति । मध्यस्थानोर्ध्वशब्दः ।
यान्यस्मिंस्तिष्ठति तानि धीतिभिश्च मनसा च विपर्ययन्ति परिभुवः
परिभवन्ति सर्वाणि कर्माणि वर्षकर्मणा । इत्यधिदैवतम् ।
अथाध्यात्मम् । सप्तेमानीन्द्रियाण्ययमात्मा गिरति
मध्यस्थानोर्ध्वशब्दः । यान्यस्मिंस्तिष्ठन्ति तानि धीतिभिश्च मनसा
च विपर्ययन्ति परिभुवः परिभवन्ति सर्वाणीन्द्रियाणि ज्ञानकर्मणा ।
इत्यात्मगतिमाचष्टे ३४

न वि जानामि यदिवेदमस्मि निण्यः संनद्धो मनसा चरामि ।

न विजानामि यदि वेदमस्मि निण्यः संनद्धो मनसा चरामि । न

हि जानन्बुद्धिमतः परिवेदयन्तेऽयमादित्योऽयमात्मा ३५

अपाङ्‍ प्राङेति स्वधया गृभीतोऽमर्त्यो मर्त्येना सयोनिः ।
ता शश्वन्ता विषूचीना वियन्ता न्य १ न्यं चिक्युर्न नि चिक्युरन्यम् ॥

अपाञ्चयति प्राञ्चयति स्वधया गृभीतोऽमर्त्य आदित्यो मर्त्येन
चन्द्रमसा सह । तौ शश्वद्गामिनौ विश्वगामिनौ बहुगामिनौ वा ।
पश्यत्यादित्यं न चन्द्रमसम् । इत्यधिदैवतम् ।
अथाध्यात्मम् । अपाञ्चयति प्राञ्चयति स्वधया गृभीतोऽमर्त्य आत्मा
मर्त्येन मनसा सह । तौ शश्वद्गामिनौ विश्वगामिनौ बहुगामिनौ वा
। पश्यत्यात्मानं न मनः । इत्यात्मगतिमाचष्टे ३६

तदिदास भुवनेषु ज्येष्ठं यतो जज्ञ उग्रस्त्वेषनृम्णः ।
सद्यो जज्ञानो नि रिणाति शत्रूननु यं विश्वे मदन्त्यूमाः ॥

तद्भवति भूतेषु भुवनेषु ज्येष्ठमादित्यं यतो जज्ञ उग्रस्त्वेषनृम्णो
दीप्तिनृम्णः । सद्यो जज्ञानो निरिणाति शत्रूनिति । रिणातिः
प्रीतिकर्मा दीप्तिकर्मा वा । अनुमदन्ति यं विश्व ऊमाः ।
इत्यधिदैवतम् ।
अथाध्यात्मम् । तद्भवति भूतेषु भुवनेषु ज्येष्ठमव्यक्तं यतो जायत
उग्रस्त्वेषनृम्णो ज्ञाननृम्णः । सद्यो जज्ञानो निरिणाति शत्रूनिति ।
रिणातिः प्रीतिकर्मा दीप्तिकर्मा वा । अनुमदन्ति यं सर्वे ऊमाः ।
इत्यात्मगतिमाचष्टे ३७

को अद्य युङ्क्ते धुरि गा ऋतस्य शिमीवतो भामिनो दुर्हृणायून् ।
आसन्निषून्हृत्स्वसो मयोभून्य एषां भृत्यामृणधत्स जीवात् ॥

क आदित्यो धुरि गा युङ्क्ते । रश्मीन्कर्मवतो भानुमतो
दुराधर्षानसून्यसुनवन्तीषूनिषुणवन्ति मयोभूनि सुखभूनि । य इमं

संभृतं वेद कथं स जीवति । इत्यधिदैवतम् ।
अथाध्यात्मम् । क आत्मा धुरि गा युङ्क्ते । इन्द्रियाणि कर्मवन्ति भानुमन्ति दुराधर्षानसून्यसुनवन्तीषूनिषुणवन्ति मयोभूनि सुखभूनि । य इमं संभृतं वेद चिरं जीवति । इत्यात्मगतिमाचष्टे ३८

क ईषते तुज्यते को बिभाय को मंसते सन्तमिन्द्रं को अन्ति ।
कस्तोकाय क इभायोत रायेऽधि ब्रवत्तन्वे३ को जनाय ॥

क एव गच्छति को ददाति को बिभेति को मंसते सन्तमिन्द्रम् ।
कस्तोकायापत्याय महते च नो रणाय रमणीयाय दर्शनीयाय ३९

को अग्निमीट्टे हविषा घृतेन स्रुचा यजाता ऋतुभिर्ध्रुवेभिः ।
कस्मै देवा आ वहानाशु होम को मंसते वीतिहोत्रः सुदेवः ॥

क आदित्यं पूरयति हविषा च घृतेन च स्रुचा यजाता ऋतुभिर्ध्रुवेभिरिति । कस्मै देवा आवहानाशु होमार्थान्को मंसते वीतिहोत्रः सुदेवः कल्याणदेवः । इत्यधिदैवतम् ।
अथाध्यात्मम् । क आत्मानं पूरयति हविषा च घृतेन च स्रुचा यजाता ऋतुभिर्ध्रुवेभिरिति । कस्मै देवा आवहानाशु होमार्थान्को मंसते वीतिहोत्रः सुप्रज्ञः कल्याणप्रज्ञः । इत्यात्मगतिमाचष्टे ४०

त्वमङ्ग प्र शंसिषो देवः शविष्ठ मर्त्यम् ।
न त्वदन्यो मघवन्नस्ति मर्डितेन्द्र ब्रवीमि ते वचः ॥

त्वमङ्ग प्रशंसीर्देवः शविष्ठ मर्त्यं न त्वदन्योऽस्ति मघवन्पाता वा पालयिता वा जेता वा सुखयिता वा । इन्द्र ब्रवीमि ते वचः स्तुतियुक्तम् ४१

द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परि षस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभि चाकशीति ॥

द्वौ द्वौ प्रतिष्ठितौ सुकृतौ धर्मकर्तारौ । दुष्कृतं पापं परिसारकमित्याचक्षते । सुपर्णा सयुजाः सखायेत्यात्मानं परमात्मानं प्रत्युत्तिष्ठति । शरीर एव तज्जायते वृक्षम् । ऋक्षं शरीरम् । वृक्षे पक्षौ प्रतिष्ठापयति । तयोरन्यद्भुक्त्वान्यदनश्नन्नन्यां सरूपतां सलोकतामश्नुते । य एवं वेदानश्नन्नन्योऽभिचाकशीति । इत्यात्मगतिमाचष्टे ४२

आ याहीन्द्र पथिभिरीळितेभिर्यज्ञमिमं नो भागधेयं जुषस्व ।
तृप्तां जुहुर्मातुळस्येव योषा भागस्ते पैतृष्वसेयी वपामिव ॥

आगमिष्यन्ति शक्रो देवतास्तास्त्रिभिस्तीर्थैभिः शक्रप्रतरैरीळितेभिस्त्रिभिस्तीर्थैर्यज्ञमिमं नो यज्ञभागमग्नीषोमभागाविन्द्रो जुषस्व । तृप्तामेवं मातुलयोगकन्या भागं सर्तृकेव सा या देवतास्तास्तत्स्थाने शक्रं निदर्शनम् ॥

विप्रं विप्रासोऽवसे देवं मर्तास ऊतये ।
अग्निं गीर्भिर्हवामहे ॥

विप्रं विप्रासोऽवसे विदुः । वेद विन्दतेर्वेदितव्यम् । विमलं शरीरं वायुना । विप्रस्तु पद्मनिलयं हृदिस्थितमकारसंहारितमुकारं पूरयन्मकारनिलयं गमयति । विप्रं प्राणेषु बिन्दुः सिक्तं विकसितं वह्नितेजः प्रभुं कनकं
पद्मेष्वमृतशरीरममृतजातस्थितममृतवादममृतमुखा वदन्ति । अग्निं गीर्भिर्हवामहे । अग्निं संबोधयेत् । अग्निः सर्वा देवताः । इति । तस्योत्तरा भूयसे निर्वचनाय ४३

हंसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् ।
नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतम् ॥

हंस इति हंसाः सूर्यरश्मयः । परमात्मा परं ज्योतिः ।
पृथिव्याप्तेति व्याप्तं सर्वं व्याप्तं वननकर्माभ्यासेनादित्यमण्डलेनेति
। त्यजतीति लोकः । त्यजतीति हंसः । त्यजन्तीति हंसाः ।
परमहंसाः परमात्मा सूर्यरश्मिभिः प्रभूतगभीतवसतीति ।
त्रिभिर्वसतीति वा । वह्निर्वसतीति वा । रश्मिभिर्वसतीति वा
। सुवर्णरेताः पूषा गर्भाः । रिफिरिति रिफता चमकुटिलानि
कुटन्ता रेफन्तान्तरिक्षं चरेदर्थेति । अन्तरिक्षं चरतीति दिवि ।
भूमिगमनं वा । स्वर्भानुः सुप्रसूतो होता । होतादित्यस्यगता
भवन्ति । अतिथिर्दुरोणसत् । रवन्ति सर्वे रसाश्चिकीर्षयन्ति
रश्मिभिश्चिकीर्षयन्तीति वा । वह्निर्विकर्षयति । नतं
भवतीत्यश्वगोजा अद्रिगोजा धनगोजा सर्वगोजातिर्ऋच इति तेजो
बहुजो शब्दो भवति । निगमो निगमव्यो भवत्यृषिनिर्वचनाय
४४

त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् ।
उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् ॥

त्र्यम्बको रुद्रः । तं त्र्यम्बकं यजामहे । सुगन्धिं सुष्ठुगन्धिं
पुष्टिवर्धनं पुष्टिकारकमिव । उर्वारुकमिव फलं
बन्धनादारोधनान्मृत्योः सकाशान्मुञ्चस्व मां कस्मादित्येषापरा
भवति ४५

जातवेदसे सुनवाम सोममरातीयतो नि दहाति वेदः ।
स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः ॥

जातवेदस इति जातमिदं सर्वं सचराचरं स्थित्युत्पत्तिप्रलयन्यायेन
जातवेदस्यां वैव जातवेदसेऽर्चाय सुनवाम सोममिति ।
प्रसवायाभिषवाय सोमं राजनममृतम् । अरातीयतो

यज्ञार्थमनिस्मो निर्दहति निश्चयेन दहति भस्मीकरोति । सोमो ददिदित्यर्थः । स नः पर्षदति दुर्गाणि विश्वानि दुर्गमानि स्थानानि नावेव सिन्धुम् । नावा सिन्धुं यथा यः कश्चित्कर्णधारो नावा सिन्धोः स्यन्दमानानां नदीं जलदुर्गां महाकुलां तारयति दुरितात्यग्निरिति दुरितानि तारयति । तस्यैषापरा भवति ४६

इदं तेऽन्याभिरसमानमद्भिर्याः काश्च सिन्धुं प्र वहन्ति नद्यः ।
सर्पो जीर्णामिव त्वचं जहाति पापं सशिरस्कोऽभ्युपेत्य ॥

इदं तेऽन्याभिरसमानाभिर्याः काश्च सिन्धुं पतिं कृत्वा नद्यो वहन्ति । सर्पो जीर्णामिव सर्पस्त्वचं त्यजति । पापं त्यजन्ति । आप आप्नोतेः । तासामेषा भवति १४ ३४

शतं जीव शरदो वर्धमानः शतं हेमन्ताञ्छतमु वसन्तान् ।
शतमिन्द्राग्नी सविता बृहस्पतिः शतायुषा हविषेमं पुनर्दुः ॥

शतं जीव शरदो वर्धमानः । इत्यपि निगमो भवति ।

शतमिति शतं दीर्घमायुः । मरुतो मां वर्धयन्ति । शतमेव शतमात्मानं भवति । शतमनन्तं भवति । शतमैश्वर्यं भवति । शतमिति शतं दीर्घमायुः ४७

मा ते राधांसि मा त ऊतयो वसोऽस्मान्कदा चना दभन् ।
विश्वा च न उप मिमीहि मानुष वसूनि चर्षणिभ्य आ ॥

मा च ते धनानि मा च ते कदाचन सरिषुः सर्वाणि प्रज्ञानान्युपमानय । मनुष्यहितोऽयमादित्योऽयमात्मा । अथैतद-नुप्रवदति । अथैनं महान्तमात्मानमेषग्गणः प्रवदति ।

वैश्वकर्मणो देवानां नु वयं जाना नासदासीन्नो सदासीत्तदानीम् ।

इति च । सैषात्मजिज्ञासा । सैषा सर्वभूतजिज्ञासा । ब्रह्मणः
सार्ष्टिं सरूपतां सलोकतां गमयति य एवं वेद ।
नमो ब्रह्मणे । नमो महते भूताय । नमो यास्काय ।
ब्रह्मशुक्लमतीय ब्रह्मशुक्लमसीय ४८

इति परिशिष्टम्